# South Asian Retrospective Material India

## Filmed by The Library of Congress Office New Delhi, India

## 1993

Available from
Photoduplication Service
Library of Congress
Washington, D.C. 20540





Śārṅgadhara (Son of Devarāja)
[Triśatī. Hindi & Sanskrit]
Triśatī [microform] / Śārṅgadharavinirmitā ; Vallabhabhaṭṭaviracita Saṃskṛtaṭīkāsahitā seyaṃ Kiśorīvallabhaviracita-bhāṣāṭīkayā samalaṅkṛtya [sampāditā]. -- Mumbayyāṃ : "Śrīveṅkaṭeśvara" (Sṭīm) Mudraṇayantrālaye mudrāyitvā prakāśitā, 1968 [1911]
163 p. ; 24 cm.
Hindi and Sanskrit.
Ancient verse manual, with Sanskrit commentary and Hindi translation of medical

CONTINUED ON NEXT CARD



Śārṅgadhara (Son of Devarāja) -- Triśatī [microform] / ... 1911. (Card 2)

practice according to ayurvedic system in Indic medicine.
Microfiche. New Delhi : Library of Congress Office ; Washington, D.C. : Library of Congress Photoduplication Service, 1993. 3 microfiches.










॥ श्रीः ॥

# त्रिशती ।

वैद्यवरश्रीशार्ङ्गधरविनिर्मिता ।

श्रीयुतपण्डितवैद्यवल्लभभट्टविरचित-

संस्कृतटीकासहिता ।

सेयं [illegible]

पं० रामप्रसाद ज्योतिषी हेड [illegible]टीचर डिस्ट्रिक्टस्कूल

ललितपुर, [illegible] चि[illegible]म्य,

आयुर्वेदाचार्यवैद्यराजकिशोरीवल्लभविरचित-

भाषाटीकया समलंकृत्य,

क्षेमराज-श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

( खेतवाडी ७ वीं गली खम्बाटा लैन )

स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशिता ।

संवत् १९६८, शके १८३३.

# भूमिका।

यद्यपि हमारे आयुर्वेदमें चरक सुश्रुत इत्यादि बडे २ आर्षग्रन्थ तथा वाग्भट, भावप्रकाश आदि पण्डितोंके बनायेहुए ग्रन्थ विद्यमान हैं और उनमें एकसे एक बढकर चिकित्साके प्रयोग भरे पडेहैं, परन्तु उन ग्रन्थरत्नोंके पूर्ण विद्वान तथा उनके अनुसार चिकित्सा करनेवाले वैद्य समयकी महिमासे इनेगिने रहगये हैं। और देशमें रोग तथा रोगियोंकी संख्या बढती जातीहै। जिससे मनुष्योंके ... और बुद्धिमें ह्रास होरहाहै। इस दशामें सभी बुद्धिमान् समझ सकतेहैं कि क... ग्रन्थ ऐसा हो कि संक्षिप्त होनेपर भी उसमें उत्तम उत्तम निदान औषध इत्यादि आवश्यक बातें हों।

बडे हर्षकी बात है कि वैद्यवर शार्ङ्गधरकी बनाई हुई त्रिशती एक उत्तम ग्रन्थ है। वैद्यक ग्रन्थ होनेपर भी इसमें कविता ऐसी अच्छी है कि सुनकर ही मन प्रसन्न होजाताहै। वैद्यवरने इसमें चरक सुश्रुतादि ग्रन्थोंके आशय लेकर प्रायः ३०० श्लोकोंमें ज्वरोंके स्वरूप निदान और चिकित्सा आदि सब कहदियेहैं। ज्वर ही रोगोंका राजा है। ज्वरके आते ही उसकी अच्छी चिकित्सा होनेसे रोग नहीं होने पाते। इसलिये इस ग्रन्थमें ज्वरोंकी ही विस्तारपूर्वक चिकित्सा कहीहै और सन्निपात रोग तो ऐसा भयङ्कर होताहै कि उसमें वैद्योंको भी उपाय करना कठिन पड जाताहै। इसी कठिनताको दूर करनेके लिये इसमें सन्निपातकी भी बडी उत्तम चिकित्सा कही है।

इस त्रिशतीकी संस्कृतटीका वैद्य वल्लभभट्टने कीहै। सन्निपात आदि कठिन स्थलोंकी व्याख्याके समय चरक सुश्रुतादि ग्रन्थोंके प्रमाणोंसे मूलको इन्होंने निस्सन्देह करदिया है। और औषध बनाने आदिकी रीति भी वैद्यक सम्प्रदायके अनुसार उत्तम लिखीहै। हिन्दी जाननेवाले भी इससे लाभ उठावें इस आशयसे मैंने इसकी सरल भाषाटीका बनाई है इससे हिन्दी जानने वालोंको ग्रन्थके आशय समझनेमें खूब सरलता होगी क्योंकि श्लोकका पूरा २ आशय इसमें आगयाहै। इसके छापने आदिका सम्पूर्ण अधिकार मैंने "श्रीवेङ्कटेश्वर" यन्त्रालयाधिपति सेठ खेमराज श्रीकृष्णदासजीको दियाहै, इसलिये कोई दूसरा आदमी इसको छापनेका साहस न करै नहीं तो लाभके बदले हानि उठानी पडेगी।

पण्डित किशोरीवल्लभवैद्य आयुर्वेदाचार्य।

॥ श्रीः ॥

## संस्कृतटीका भाषाटीकासहितत्रिशतिकी

## विषयानुक्रमणिका ।





इत्यनुक्रमणिका समाप्ता ।

॥ श्रीः ॥

वैद्यवरश्रीशार्ङ्गधरविनिर्मिता–

# त्रिशती

संस्कृतटीका–भाषाटीकासहिता ।

### मङ्गलाचरणम् ।

**उदयगिरिशिरःस्थो निद्रया मूढमेत-**
**ज्जगदगदमशेषं निर्मिमीतेऽनिशं यः ॥**
**अमिततमतमिस्रोद्दामदारिद्र्यहारि-**
**प्रसृमरकिरणौघः स्तान्मुदे वः स देवः ॥ १ ॥**

नमस्कृत्य महादेवं सोमं सर्वार्थसिद्धिदम् ॥
क्रियते त्रिशतीव्याख्या मुग्धवैद्यमुदे मया ॥ १ ॥
श्रीमती त्रिशतश्लोकी नानावृत्तसमन्विता ॥
कविशार्ङ्गधरप्रोक्ता दुर्व्याख्येयाल्पबुद्धिभिः ॥ २ ॥

तत्रादौ सर्वविघ्नपरिहारपुरस्सरं सर्वाभीष्टप्राप्तये सर्वसवितारं गायत्र्युदिततेजोराशिं जगत्प्रबोधकं धातारं स्तौति । उदयेति ॥ स देवः दीव्यत्यात्मस्वरूपेणेति देवः प्रकाशकः सविता सूर्यः वो युष्माकं मुदे हर्षाय स्तात् भवतादित्यर्थः । मंगलाचरणे आशिषि लोट् । यत्तदोर्नित्यसंबंधः । सः कः यः सूर्यः अशेषं संपूर्ण जरायुजोद्भिज्जाण्डजस्वेदजयुक्तमेतत् जगत् विश्वम् अनिशं वारंवारम् अगदं न विद्यते गदो रोगः प्रकृतत्वान्निद्राख्यो यस्य तत् । निद्रया अपि सहजरोगत्वात्तादृशं चेतनायुक्तं निर्मिमीते कुरुते । निद्रातुरं जगत्प्रबोधापादनेन स्वच्छं करोतीति तात्पर्यम् । किंभूतं जगत् । निद्रया कालरात्र्या महासर्पिण्या ग्रस्तम्, अत एव मूढमचेतनम् । किंभूतः सूर्यः । उदयगिरिशिरःस्थः उदयाचलशिखरस्थितः । पुनः किंभूतः । न मितम् अतिबहुलम् तमो

यस्यां सा अमिततमा या तमिस्रा रात्रिः सैव । उद्दामम् उत्कटं यद्दारिद्र्यं तस्य हरणशीलाः प्रसृमराः प्रसरणशीलाः किरणानामोघाः किरणसमूहाः यस्य सः । यद्वा अतिशयेन अमितम् अमिततमम् अतिबहुलं यत्तमिस्रं महांधकारं च उद्दामश्च तद्दारिद्र्यं च तयोर्हरणशीलाः प्रसरणशीलाः किरणौघाः यस्य सः । अनेन प्रकाशकत्वं निर्मातृत्वश्चोक्तं ब्रह्मस्वरूपित्वमुक्तम् । उक्तं च-" ध्येयः सदा सवितृमंडलमध्यवर्ती" इति "प्रभाते ब्रह्मरूपाय मध्याह्ने शिवरूपिणे ॥ सायं विष्णुस्वरूपाय तुभ्यं देवात्मने नमः ॥ १ ॥" इति च ।

ॐनमो ब्रह्मप्रजापत्यश्विबलभिद्धन्वन्तरिसुश्रुतप्रभृतिभ्यः । अत्यन्त अन्धकारयुक्त रात्रिरूपी उत्कट दरिद्रताको हरनेवाली विस्तृत किरणोंके समूहवाले, उदयाचलके शिखरपर स्थित जो सूर्य, निद्रासे अचेतन सम्पूर्ण संसारको वारम्वार रोगरहित अथवा निद्रारूपी रोगरहित करतेहैं । वह दिव्यस्वरूप सविता देव तुम्हारे हर्षके लिये होयँ ॥ १ ॥

दिव्यस्त्रीकुचपत्रवल्ल्यविरतोल्लासैकहेतुं सुधा-
पूर्णं यः कलशं दधज्जलनिधेराविर्बभूवेच्छया ॥
नानाव्याधिभरातुराखिलजगज्जीवातुरायुः स्थिरं
दिश्याद्वो दुरितौघकुंजरहरिर्देवः स धन्वन्तरिः ॥ २ ॥

दिव्यस्त्रीति ॥ सः धन्वंतरिर्देवः धनुषः शार्ङ्गस्य अंतरे जातः धन्वंतरिः वः युष्मभ्यं आयुः स्थिरं रोगाद्युपद्रवराहित्येन दृढं दिश्यात् देयादित्यर्थः । सः कः यः जलनिधेः सकाशात् इच्छया प्रणतेन्द्रादिमनोरथेन स्वेच्छामात्रकल्पितशरीरेण वा आविर्बभूव जातः । किंभूतः । सुधापूर्णम् अमृतेन पूर्णं कलशं कुंभं दधत् । किंभूतं कलशम् । दिविभवानां देवानां स्त्रीणां कुचयोः पत्रवल्लीनां पत्रलताकारादिरचनानाम् अविरतं यथा तथा उल्लासो हर्षस्तस्यैको हेतुः । एतेन इन्द्रादीनाम् अमृतपानेनामरतापादनप्रयोजनं सूचितम् । पुनः किंभूतम् । नानाव्याधयोऽनेकव्याधयो अनेकरोगास्तेषां भरः समूहः तेन आतुरं पीडितं यत् अखिलं समग्रं जगत् विश्वं तस्य जीवातुः जीवनौषधम् । आयुर्वेदप्रणयनद्वारा तदुपदेशकत्वात् । पुनः किंभूतः । दुरितौघकुंजरहरिः दुरितानां दुष्कृतानाम् ओघाः समूहाः त एव कुंजराः हस्तिनस्तेषु हरिः सिंहः दुष्कृतसमुदायनाशक इत्यर्थः ॥ २ ॥



देवताओंकी स्त्रियोंके स्तनोंकी पत्र रचनाओंके निरन्तर हर्षके मुख्य कारण ( इससे इन्द्रादि देवताओंको अमृतपानसे अमरत्व सूचित किया है ) जो धन्वन्तरि अमृतसे भरेहुए कलशको लिये हुए अपनी इच्छामात्रसे समुद्रमेंसे प्रगट हुए । उनही धन्वन्तरिने अनेक रोगोंके समूहसे पीडित सम्पूर्ण जगत्के जीवनकी औषधियों ( आयुर्वेदको प्रकाशकर सुश्रुतआदिकोंको संजीवन औषधियों ) का उपदेश दिया पापोंके समूहरूपी हाथियोंमें सिंहरूप वह तुमको चिरकाल तक स्थिर आयुःप्रदान करैं ॥ २ ॥

रणप्रवणदानवव्रजविमुक्तशस्त्रास्त्रज-
व्रणप्रजनितव्यथाविधुरवासवाराधितौ ॥
स्फुरद्गुरुतरज्वरप्रचुरतिग्मतापार्दित-
प्रजाश्रितपदाम्बुजौ सततमश्विनौ संस्तुमः ॥ ३ ॥

रणेति ॥ वयं सततं निरंतरम् अश्विनौ संस्तुमो नमाम इत्यर्थः । किंभूतौ अश्विनौ । रणे संग्रामे प्रवणा निपुणा दानवव्रजा दैत्यसमूहास्तैर्विमुक्तानि शस्त्रास्त्राणि तेभ्यः जातानि व्रणानि क्षतानि तेभ्यः प्रजनिता उत्पन्ना या व्यथा पीडा तया विधुरः विह्वलश्चासौ वासवश्च इन्द्रः तेन आराधितौ सेवितौ । एतेन शल्यतंत्रप्रावीण्यमुक्तम् । पुनः किंभूतौ अश्विनौ । स्फुरंतो देदीप्यमाना गुरुतरा अतिशयेन महांतो ये ज्वरा ये रोगास्तेषां प्रचुरतिग्मतापेन बहुतीव्रतापेन अर्दिताः पीडिता याः प्रजास्ताभिः आश्रिते पदांबुजे ययोस्तौ । एतेन कायादिसप्ततंत्रप्रावीण्यं सूचितम् ॥ ३ ॥

संग्राममें निपुण दैत्योंके समुदायसे छोडेहुए शस्त्र और अस्त्रोंसे उत्पन्नहुए व्रणों ( घावों ) की पीडासे पीडित इन्द्रसे सेवित, और प्रचण्ड महारोगोंके तीव्र तापसे पीडित प्रजासे सेवितहै चरणकमल जिनके ऐसे अश्विनीकुमारोंकी निरन्तर हम स्तुति करतेहैं ॥ ३ ॥

अद्वैतोदधिगाहनादविरतं विध्वस्ततापत्रयः
स्वांताविष्कृतनित्यनिर्मलचिदानंदप्रबोधोदयः ॥
वैकुण्ठाश्रमसंज्ञया यतिपतिर्नः स्यान्नमस्यास्पदं
कस्यायं निगमांतशास्त्रविलसत्कांतारकंठीरवः ॥ ४ ॥

ततः स्वगुरुं प्रणमति अद्वैतेति ॥ अयं वैकुंठाश्रमसंज्ञया नाम्ना यतिपतिः संन्यासी कस्य मस्तकस्य नमस्काराय आस्पदं स्थानं न स्यात् आशिषि पादादयः भूपादित्यर्थः । "सुखशीर्षजलेषु कम्" इति विश्वः ।

कीदृशः यतिपतिः । अविरतं संततं द्वयोर्भावो द्विता द्विता एव द्वैतं न द्वैतम् अद्वैतं मायारहितं वेदांतशास्त्रं तदेवोदधिः समुद्रस्तस्य गाहनम् अवलोडनं तस्मात् विध्वस्तं नष्टं तापानां त्रयं येन सः । पुनः किंभूतः । स्वांते मनसि आविष्कृतः प्रकटीकृतो नित्यः अनाशः निर्मलः गुणरहितः चिच्च आनंदश्च प्रबोधश्च तेषामुदयः प्रकाशो येन चित्सत्यज्ञानं आनंदो द्विधाराहित्यं प्रबोधः आत्मप्रकाशः । पुनः किंभूतः । निगमांतानि वेदांतादीनि शास्त्राणि तान्येव विलसंति कांताराणि गहनवनानि तेषु कंठीरवः सिंहः " कांतारं वर्त्म दुर्गमम् " इत्यमरः ॥ ४ ॥

मायारहित वेदान्तशास्त्ररूपी समुद्रके मथनसे नष्ट कियेहैं तापत्रय जिन्होंने, और चित्तमें प्रगट कियाहै सत्य ज्ञान आनन्द और आत्मप्रकाशक उदय जिन्होंने, वेदान्त आदि शास्त्ररूपी गहन वनमें सिंहके सदृश ऐसे वैकुण्ठाश्रम नामके संन्यासी किस मनुष्यके नमस्कारके स्थान नहीं हैं ? अर्थात् सबहीके नमस्कार करने योग्य हैं ॥ ४ ॥

प्रणम्य पद्मासनदक्षदस्रसहस्रदृक्काशिपतीन् गुरूंश्च ॥
ज्वरस्य हेत्वाकृतिभेषजानि वदामि किंचिद्विबुधप्रियेऽस्मिन् ॥५॥

विघ्नविनाशहेतोः एतान् प्रणमति प्रणम्येति ॥ पद्मासनश्च पद्मासनो ब्रह्मा दक्षश्च दक्षः प्रजापतिः, दस्रौ अश्विनौ च, सहस्रदृगिंद्रः, काशिपतिः काशिराजः, अत्र समाहारः समाहार एतान् प्रणम्य नमस्कृत्य चशब्दात् गुरून्प्रणम्य गुरवः परेऽपरे च । तत्र परेऽग्निवेशादयः, अपरे पित्रादयः, पुनः दस्रग्रहणं शिक्षाक्रमानुरोधात् । विबुधप्रियेऽस्मिन् ग्रंथे ज्वरस्य हेत्वाकृतिभेषजानि किंचिद्वदामि । ज्वरस्य हेतुः आदिकारणं निदानम् आकृतिर्लक्षणं भेषजमौषधं किंचिदहं वदामि संपूर्णतया न वक्ष्ये इति गर्वपरिहारः ॥ ५ ॥

ब्रह्मा, दक्षप्रजापति, अश्विनीकुमार, इन्द्र, धन्वन्तरि तथा गुरुओंको प्रणाम करके विद्वानोंके प्रेमकारक इस ग्रन्थमें ज्वरका निदान, लक्षण, औषधि ये संक्षेपसे कहताहूं ॥ ५ ॥

मखे मखभुजां गणं किल निमंत्र्य दक्षः पुरा
चराचरगुरुं हरं मदभरादवाजीगणत् ॥
ततस्तदलिकेक्षणादतिरुषारुणात्पिंगल-
स्त्रिमौलिरुदभूद्गणः सपदि वीरभद्राभिधः ॥ ६ ॥



तत्र तावदतिविप्रकृष्टहेतुं निरूपयन् प्रसंगाज्ज्वरस्याधिदैविकीं प्रथमोत्पत्तिमाह-मख इति ॥ पुरा सर्गादौ दक्षः दक्षप्रजापतिः किलेति सत्यं हरं रुद्रं मदभरात् मदस्योद्रेकात् अवाजीगणत् तिरस्कारं न पूजयामास । किं कृत्वा । मखभुजां देवानां गणं समूहं मखे यज्ञे यज्ञनिमित्तं निमंत्र्य आहूय किंभूतं हरम् । चराचरगुरुं सृष्टिस्थितिसंहृतिकारकं ततोऽपमानानंतरं सपदि शीघ्रं तदलिकेक्षणात् तस्य रुद्रस्य अलिकेक्षणं ललाटनेत्रं तस्मात् वीरभद्राभिधः वीरभद्रनामा गणः उदभूत् प्रादुर्बभूव । किंभूतात् अलिकेक्षणात् । अतिरुषारुणात् अतिक्रोधारक्तात् । किंभूतः गणः । पिंगलः पीतवर्णः । पुनः किंभूतः । त्रिमौलिस्त्रिमूर्द्धा " ललाटमलिकं गोधिः " इत्यमरः ॥ ६ ॥

पहिले समयमें दक्षप्रजापतिने यज्ञमें देवताओंके समूहको निमंत्रण देकर चर और अचरके गुरु अर्थात् उत्पत्ति, स्थिति और संहारके करनेवाले शिवजीको अभिमानसे नहीं पूजा । इस शिवजीके अपमानके अनन्तर ही शिवजीके अत्यन्त क्रोधसे लाल ललाटके नेत्रसे शीघ्र ही पीलेवर्ण तथा तीन शिरवाला वीरभद्रगण उत्पन्नहुआ ॥ ६ ॥

भृशं स च पिशंगदृक् त्वचमरेर्मृगस्योल्लस-
द्रुचं परिदधज्ज्वलत्तनुरनुच्चजंघात्रयः ॥
स्फुरत्पृथुतरोदरस्त्रिपुरवैरिणं प्रांजलि-
र्जगाद करवाणि किं तमिदमुग्रमुग्रोऽवदत् ॥ ७ ॥

वीरभद्रं वर्णयति भृशमिति ॥ त्रिपुरवैरिणं रुद्रं प्रांजलिः प्रबद्धांजलिः सन् जगाद उवाच । प्रभो अहं किं करवाणि । कीदृशः गणः । भृशम् अत्यर्थं पिशंगा दृक् नेत्रं यस्यासौ पिशंगदृक् पीताक्षः । मृगस्य अरेः व्याघ्रस्य त्वचम् अजिनं परिदधत् परिधानं कुर्वन् । कीदृशीं त्वचम् । उल्लसती रुक् कांतिर्यस्याः ताम् । पुनः कीदृक् । ज्वलत्तनुः ज्वलती दीप्यमाना तनुः शरीरं यस्यासौ । पुनः कीदृक् । अनुच्चजंघात्रयः-अनुच्चं न दीर्घं जंघात्रयं यस्यासौ ह्रस्वपादित्यर्थः । पुनः कीदृक् । स्फुरत्पृथुतरोदरः । स्फुरत् देदीप्यमानं पृथुतरमतिदीर्घमुदरं जठरं यस्य सः । पश्चात् उग्रो रुद्रः उग्रं घोररूपं तं गणम् इदं वक्ष्यमाणम् अवदत् उवाच । भारतेऽप्युक्तं-'त्रिमौलिः षड्भुजस्त्रिपाद' इति ॥ ७ ॥

अत्यन्त पीले नेत्र और चमकदार मृगकी चर्मको ओढे हुए जाज्वल्यमान शरीर और छोटे तीन पाद ( पैर ) और देदीप्यमान, अत्यन्त बडे उदरवाला ऐसा वह गण वीरभद्र हाथ

जोडकर त्रिपुरासुरके शत्रु शिवजी महाराजसे बोला कि, मैं क्या काम करूं ? तब क्रोधयुक्त शिवजीने घोररूप उस गणको वक्ष्यमाण वचन कहे ॥ ७ ॥

सवं कुरु निरुत्सवं स इति रुद्रतो निर्दयं
निशम्य समशीशमत् प्रथममेव वह्नित्रयम् ॥
मरुद्गणमदुद्रवद्भवमतुष्टवद्याज्ञिकान्
मुनीनलमनीनमद्दमनभीतिसन्नस्वरान् ॥ ८ ॥

किमुवाच ? सवमिति ॥ हे वीरभद्र ! त्वं सवं निरुत्सवम् आनंदरहितं कुरु विध्वंसयेति यावत् । स वीरभद्रो रुद्रतः भवात् अतिनिर्दयं वचः निशम्य श्रुत्वा प्रथममेव आदौ वह्नित्रयं गार्हपत्याहवनीयदक्षिणाग्निसंज्ञं समशीशमत् शमयामास । 'शाम्यतेर्ण्यंतात् णिश्रीत्यादिना चङ्' स गणः मरुद्गणं देवसमूहं अदुद्रवत् द्रावयामास । भवं रुद्रं याज्ञिकान् यज्ञसंबंधिभिः ऋत्विग्भिः कृत्वा अतुष्टवत् स्तावयामास । स्तौतेर्ण्यंताच्चङ् तस्य च शब्दकर्मत्वाद्याज्ञिकानित्यत्र गतिबुद्धीत्यादिना कर्मसंज्ञायां द्वितीया । दमनभीत्या दंडभयेन सन्नो म्लानः स्वरो येषां तान् मुनीन् मुनिभिः भवम् अलम् अत्यर्थं अनीनमत् नमस्कारयांचकार । नमतेर्ण्यंताच्चङ् नमनमिति गत्यर्थत्वात् बुद्ध्यर्थत्वाद्वा । मुनीनित्यत्र पूर्ववद्वितीया ॥ ८ ॥

हे वीरभद्र ! यज्ञको आनन्दरहित करो । वीरभद्र शिवजीके इस निर्दयी वचनको सुनकर प्रथम गार्हपत्य, आहवनीय, दक्षिणाग्नि इन तीन अग्नियोंको ही शान्त करताहुआ । फिर देवताओंके समूहको भगाया । शिवजीकी स्तुति की । दण्डके भयसे भीत मौन हुए यज्ञमें स्थित मुनियोंको नमस्कार किया ॥ ८ ॥

इदं तमवदत्स्थितं पुररिपुः पुरस्ताद्यतो-
ऽखिलं हविरिह क्रतोर्झटिति जीर्णमेतत्त्वया ॥
अतोऽस्य जगतो ज्वरो भव ततः प्रभृत्युच्चकै-
रयं ज्वरयति स्फुरद्विविधनामधेयैर्जगत् ॥ ९ ॥

अतः परं शिवो ज्वरनामधेयं करोति इदमिति ॥ पुररिपुः पुरारिः पुरस्तादग्रे स्थितं तं गणं प्रतीदं वचोऽवदत् जगाद किमिदं । यतो हेतोस्त्वया झटिति शीघ्रं क्रतोर्यज्ञस्य एतद् विद्यमानम् अखिलं हविः संपूर्णं हव्यं पुरोडाशादि जीर्णं जग्धं, भक्षयित्वा कायाग्नितेजसा भस्मसात्कृतमिति यावत् । एतेनाग्निमयत्वं सूचितम् । अतोऽग्निमयत्वाद्धेतोरस्य जगतः संसारस्य त्वं ज्वरो भव जीर्णकरो भव । ततः प्रभृति रुद्रवचनानंतरम् अयं ज्वरभावं प्राप्तो वीरभद्रः स्फुरद्विविधनामधेयैः तत्तदवलंबनभेदान्नानाप्रकारैर्नामधेयैरुपलक्षितः सन् जगत् संसारमुच्चकैरतिशयेन ज्वरयति स्वनिवेशेन संतापयतीत्यर्थः ॥ ९ ॥



शिवजीने सन्मुख खडेहुए उस गण वीरभद्रको यह कहा कि, तूने यज्ञके सम्पूर्ण हविको बहुत जल्दी जलादिया इसलिये तू इस संसारका ज्वर हो अर्थात् संसारको [illegible] करनेवाला हो । तबसे लेकर ज्वरभावको प्राप्तहुआ यह वीरभद्र दोषस्थान कालादि भेदसे अनेकप्रकारका हुआ संसारको अत्यन्त सन्तप्त करताहै ॥ ९ ॥

ज्वरो नरि स पाकलालसहरिद्रतापेश्वरा
गजोष्ट्रमहिषार्वगोष्वथ यथाक्रमं कीर्तिताः ॥
तथेंद्रमदखोरकर्षभकपक्षपाताह्वयाः
समस्ततिमिरासभांबुजखगेष्वलर्कः शुनाम् ॥ १० ॥

अथ ज्वरप्रकारमाह–ज्वरेति ॥ नरि मनुष्ये यः संतापः स ज्वरः, पाकलालसहरिद्रतापेश्वराः एते ज्वरभेदाः गजोष्ट्रमहिषार्वगोषु यथाक्रमं अनुक्रमतया कीर्तिताः उक्ताः । गजेषु पाकलनामा, उष्ट्रेषु अलसनामा, महिषेषु हरिद्रनामा, अर्वसु अश्वेषु च तापनामा, गोषु ईश्वरनामा, तथेति । इंद्रमदादयः ज्वराः समस्ततिम्यादिषु क्रमेण उक्ताः । तत्र समस्ततिमिषु मत्स्यजातिषु इंद्रमदनामा, रासभेषु गर्दभेषु खोरकनामा, अंबुजेषु कमलेषु ऋषभकनामा, खगेषु पक्षिषु पक्षपातनामा ज्वरः, शुनां भषकाणाम् अलर्कनामा ज्वरः ॥ १० ॥

मनुष्यमें जो सन्ताप हो तो उसको ज्वर, हाथिओंमें पाकल, ऊँटोंमें अलस, भैसोंमें हरिद्र, घोडोंमें ताप, गौओंमें ईश्वर नामसे ज्वर कहाहै । इसी तरह मच्छियोंमें इन्द्रमद, गधोंमें खोरक, कमलोंमें ऋषभक, पक्षियोंमें पक्षपात, कुत्तोंमें अलर्क नामका ज्वर कहाहै ॥ १० ॥

मृगामयाख्यो मृगजातिषूक्तः
प्रलेपकोजाविषु चूर्णकोन्ने ॥
उश्लीषसंज्ञः स सरीसृपेषु
पर्वा प्रसूनेषु च नीलिकाप्सु ॥ ११ ॥

मृगेति ॥ स ज्वरः मृगजातिषु मृगामयनामा उक्तः कथितः, अजाविषु छागमेषेषु प्रलेपकनामा, अन्ने चूर्णकनामा ज्वरः, सरीसृपेषु सर्वेषु उष्णीष-संज्ञः उष्णीषनामा, कंचुकाख्यनामा इति यावत्, प्रसूनेषु पुष्पेषु पर्वानामा, अप्सु जलेषु नीलिकासंज्ञः नीलिकानामा ज्वरो भवति ॥ ११ ॥

मृगजातियोंमें मृगामय नाम ज्वर, बकरा और मेंढोंमें प्रलेपक, अन्नमें चूर्ण, सर्पोंमें उष्णीष, ( कांचली ) पुष्पोंमें पर्वा और जलमें नीलिका नामक ज्वर होताहै ॥ ११ ॥

कुंकुमको गोधूमे ज्योतिष्पुस्त्वोषधीषु सर्वासु ॥
ग्रंथिकसंज्ञो व्रततावित्यभिधानैर्ज्वराः कथिताः ॥१२॥

कुंकुमेति ॥ गोधूमधान्ये कुंकुमकः गैरिक इति, सर्वासु ओषधीषु फलपाकांतासु ज्योतिष्कनामा, व्रततौ वल्ल्यां ग्रंथिकनामा इत्यभिधानैः अनेकनामभिः ज्वराः कथिताः । ग्रंथांतराज्ज्वरस्य नामानि स्वरूपं चाह–तद्यथा "ज्वरो रोगपतिः पाप्मा मृत्युरोजोशनांतकः ॥ क्रोधाद्दक्षाध्वरध्वंसी रुद्रोर्द्धनयनोद्भवः ॥ १ ॥ ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः ॥ भस्मप्रहरणो रौद्रः कालांतकयमोपमः ॥ २ ॥ वैयाघ्रचर्मवसनः कपिलोज्वलविग्रहः ॥ पिंगेक्षणो ह्रस्वजंघो बीभत्सो बलवानलम् ॥ ३ ॥ जन्मांतयोर्मोहमयः संतापात्मापचारजः ॥ विविधैर्नामभिः क्रूरो नानायोनिषु वर्तते" ॥ ४ ॥ अथ ज्वरप्रकारः ॥ ज्वरं विद्यान्मनुष्येषु द्विरदेषु च पाकुलम् ॥ महिषेषु हरिद्रं च करभेष्टलसं तथा ॥ १ ॥ तुरङ्गमेषु तापाख्यं जानीयाद्गोषु चेश्वरम् ॥ खरेषु खोरकं सर्वमत्स्येष्विंद्रमदं तथा ॥ २ ॥ पक्षपातं विहंगेषु प्रलेपकमजाविषु ॥ मेषेषु भूतवेगं वा श्रमं पंचाननेषु च ॥ ३ ॥ शिखाभेदं मयूरेषु मृगेष्वेव मृगामयम् ॥ अलर्कं सारमेयेषु हिक्काकासं शुकेषु च ॥ ४ ॥ निर्म्मोकपदं सर्पेषु उष्णीषं वा विनिर्दिशेत् ॥ पिकेषु नेत्ररोगं तं तद्वद्वृक्षेषु कोटरम् ॥ ५ ॥ पद्मोत्पलेषु ऋषभं तद्वदन्नेषु चूर्णकम् ॥ गोधूमे कुंकुमाख्यं च नीलकं सलिलेषु च ॥ ६ ॥ सर्वौषधीषु ज्योतिष्को लतासु ग्रंथिकस्तथा ॥ ऊषरं क्षेत्रभूमीषु पर्वतेषु शिलाजतु ॥ पर्वासंज्ञं प्रसूनेषु शाके विद्यान्मधूपकम् ॥ ७ ॥ इति ज्वरनामानि ॥ १२ ॥

गोधूम ( गेहूं ) धान्यमें कुंकुम, संपूर्ण औषधियोंमें ज्योतिष्क तथा लताओंमें ग्रन्थिकनामक ज्वर होताहै । इसप्रकार अनेक नामोंसे ज्वर कहेगयेहैं ॥ १२ ॥



## ज्वरकी संप्राप्ति ।

दुष्टाः स्वहेतुभिरुपेत्य मलाः प्रकाम-
मामाशयं च रसमाममथोष्मयुक्ताः ॥
रुद्ध्वा जवाद्रसवहानि शिरामुखानि
पक्काशयाज्ज्वलनमाशु बहिर्निरस्य ॥ १३ ॥
आप्याखिलामपि तनुं परितस्तपंतो
निर्वर्तयंति सपदि ज्वरमात्मरूपम् ॥
तं वातपित्तकफसंकरसंनिपाता-
गंतुप्रभेदत इहाष्टविधं वदंति ॥ १४ ॥

अथ ज्वरस्य संप्रातिमाह–दुष्टा इति ॥ स्वहेतुभिः स्वकारणैः दुष्टाः प्रकुपिताः मलाः दोषाः प्रकाममतिशयेन सपदि तत्क्षणमेव आत्मस्वरूपं ज्वरं निवर्तयंति कुर्वंति । किं कृत्वा, आमाशयं च पुनः आमं रसं ऊष्मणोऽल्पबलत्वादपाचितमामाशयगतं रसधातुमुपेत्य संदुष्येति यावत् । पुनः किं कृत्वा । जवात् वेगात् रसवहानि रसो धातुः स्वेदश्च तद्वहानि शिरामुखानि रुद्ध्वा आवृत्य । अत एव स्वेदाभावः । पित्तज्वरे स्वेदोपलंभात् स्वेदवहस्रोतोरोधोपतापिताः । पुनः किं कृत्वा । पक्काशयात् आशु शीघ्रं ज्वलनं कोष्ठगताग्नेरूष्माणं न तु समस्तमग्निं तदा दोषपाकोऽसंभवः स्यात् । बहिर्निरस्य प्रक्षिप्य । पुनः किं कृत्वा । अखिलामपि तनुं व्याप्य कीदृशाः मलाः ऊष्मयुक्ताः अग्नि ( दाह ) युक्ताः संतः । पुनः किंभूताः । परितः सर्वतः तपंतः तापं कुर्वन्तः । इह संसारे आचार्यास्तं ज्वरम् अष्टप्रकारं वदंति कथयंति । कस्मात् । वातपित्तकफसंकरसंनिपातागंतुकप्रभेदतः । वातश्च पित्तं च कफश्च संकरश्च संनिपातश्च आगंतुश्च वातपित्तकफसंकरसंनिपातागंतवस्तेषां प्रभेदतो भेदात् ॥ १३ ॥ १४ ॥

ज्वरकी सम्प्राप्ति कहतेहैं । अपने अपने कारणोंसे कुपित हुए ऊष्मायुक्त वात पित्त कफ आमाशय ( नाभि और स्तनोंके मध्यभागको आमाशय कहतेहैं ) में प्राप्त होकर आमरस ( कच्चे रस ) में मिलकर वेगसे रसको बहानेवाली शिराओंके मुखोंको रोककर और पक्काशयसे शीघ्र कोष्ठकी अग्निकी ऊष्मा ( गरमी ) को बाहिर निकालकर सम्पूर्ण शरीरमें व्याप्त होकर चारों तरफसे शरीरको तपातेहुए दोष शीघ्र अपने स्वरूपानुसार ज्वरको पैदा करतेहैं । वह ज्वर

वात, पित्त, कफ ( संकर अर्थात् वात पित्त, पित्त कफ, वात कफ, सन्निपात-वात पित्त कफ, आगन्तुक, ऐसे आठ प्रकारका है ॥ १३ ॥ १४ ॥

भेदान् पुनः क्षयविवृद्धिविशेषभिन्न-
दोषोद्भवान्न गणयंति हि सुश्रुताद्याः ॥
तस्मादिहापि न मया गदिताः प्रकामं
ते ग्रंथविस्तरभयप्रविकंपितेन ॥ १५ ॥

भेदानिति ॥ सुश्रुताद्याः वैद्याः क्षयविवृद्धिविशेषभिन्नदोषोद्भवान् भेदान् क्षयश्च विवृद्धिश्च क्षयविवृद्धी तयोर्विशेषः आधिक्यं तेन भिन्नेभ्यो दोषेभ्य उद्भवो येषां तान् भेदान् [illegible] गणयंति न मन्यन्ते। तस्मात् इह अस्मिन् ग्रंथे मयापि प्रकामम् अत्यर्थं ते दोषभेदा न गदिताः न कथिताः । कीदृशेन मया ग्रंथविस्तरो विस्तारस्तस्य भयंत्रासस्तेन प्रविकंपितेन ॥ १५ ॥

सुश्रुत चरक आदि महर्षि क्षय और वृद्धिकी अधिकतासे पृथक् दोषोंसे उत्पन्नहुए भेदोंसे ज्वरकी गणना नहीं करतेहैं । अतएव इस ग्रन्थमें ग्रन्थके विस्तारके भयसे कम्पित मैं भी सम्पूर्ण रीतिसे दोषोंके भेदोंसे ज्वरके भेद नहीं कहताहूं ॥ १५ ॥

ज्वरका पूर्वरूप ।

वैरस्यश्रमनयनप्लवापदर्षा
वैवर्ण्यारतिगुरुतांगमर्दतर्षाः ॥
रोमांचारुचिबहुनिद्रताऽविपाकाः
स्युर्जृंभापटुकटुकाम्लकानुरागाः ॥ १६ ॥

तत्रादौ पूर्वरूपमाह-वैरस्येति ॥ ज्वरे इदमग्रिमलक्षणं प्राग्रूपं गदितं उक्तम् । एतत्किम् । वैरस्यं मुखस्य स्वभावविपरीतरसता श्रमो भवति । नयनप्लवो नेत्रस्रावः, अप्रहर्षः शयनादिषु संतोषाभावः। वैवर्ण्यं विवर्णता, अरतिरनवस्थितचित्तत्वम्, अंगमर्दः शरीरमोटनं, तर्षः पिपासा,रोमांचः रोमोद्गमः, अरुचिः अन्नाऽप्रीतिः, बहुनिद्रता निद्राबाहुल्यम्, अविपाकः उद्गाराशुद्धिः, उत्साहो वेगोत्सर्गो यथोचितमित्यादिनोक्तान्नादिपाकलक्षणभावः जृंभादयः स्युः पटुनि क्षारे, कटुके तीक्ष्णे, अम्लके अम्लद्रव्येऽनुरागः ॥ १६ ॥



ज्वरके पूर्वरूपमें मुखमें फीकापन. थकायन, नेत्रोंसे पानी झरना, हर्षका नाश, शरीरका वर्ण बदलना, पीडा, शरीरमें भारीपन. शरीर मरोडना, प्यास, रोमाञ्च होना, अन्नादिकोंमें अरुचि, नींदकी अधिकता, अन्नादिका पाक न होना, जंभाई, लवण और चरपरे खट्टे पदार्थोंमें प्रीति- ॥ १६ ॥

अप्रीतिर्मधुररसे हितोपदेशे
बाले च क्लमथुबलक्षयौ च शीतम् ॥
छायोष्णानलशिशिरानिलेष्वकस्मा-
द्द्वेषेच्छे गदितमिदं ज्वरेऽग्ररूपम् ॥ १७ ॥

अप्रीतिरिति ॥ मधुररसे स्वादुरसेऽप्रीतिः, हितोपदेशे अप्रीतिः, बालेऽप्रीतिः क्लमथुः ग्लानिः बलक्षयः बलनाशः तौ भवतः शीतं लगतीति शेषः । छायासु अनातपे उष्मे आतपे अनलेषु वह्निषु शिशिरे शीतद्रव्ये अनिले वायौ अकस्मात् तत्क्षणमेव द्वेषश्च इच्छा च भवति। एतज्ज्वरस्याग्ररूपं पूर्वरूपं स्यात् ॥ १७ ॥

मधुररसमें द्वेष, हितकारी उपदेशोंमें द्वेष, तथा बालकोंसे द्वेष, ग्लानि, बलका नाश, ठंड लगना, छाया, धूप, अग्नि, शीतल वस्तु तथा वायुमें कभी द्वेष कभी इच्छा होतीहै । यह ज्वरके पूर्वरूपके लक्षण हैं ॥ १७ ॥

वातज्वरके लक्षण ।

निद्रानाशः शंखशिरोभ्रूहनुकर्ण-
स्कंधोरोहृद्वंक्षणवस्त्यूरुषु च स्युः ॥
नानारूपा वातरुजो विड्क्षवरोधौ
वाञ्छा घर्मे वेपथुकंठौष्ठविशोषौ ॥ १८ ॥

वातज्वरस्य लक्षणमाह-निद्रेति ॥ निद्रानाशः निद्रानिवृत्तिः शंखौ नेत्रप्रांतौ शिरो मस्तकं भ्रूहनुः कर्णस्कंधौ उरो वक्षः स्तनयोरंतरेद्व्यंगुलस्तस्यैकदेशे हृत्, वंक्षणः मेढ्रवृषणयोः संधिः, वस्तिः लिंगमूलम् ऊरू जंघोपस्थानम् । एतेषु स्थानेषु नानारूपा अनेकप्रकारा वातरुजो वातपीडाः स्युः । नानारूपत्वं वाग्भटे विवृतं यथा-"पादयोः सुप्तता स्तंभः पिंडकोद्वेष्टनं श्रमः । विश्लेष इव संधीनां साद ऊर्वोः कटिग्रहः" इत्याद्यूह्यम् । अत एव शंखेत्यस्थिमात्रस्य वंक्षणेति संधिमात्रस्य, ऊर्विति पाद-

पिडिकादेरुपलक्षणम् । विट्क्षवरोधौ, विड्रोधः गाढपुरीषत्वं, क्षवरोधः छिक्कास्तंभः, घर्मे आतपे वांछा इच्छा भवति वेपथुः कम्पः कंठश्च ओष्ठौ च तेषु शोषो भवति ॥ १८ ॥

निद्राका नाश, कनपुटी, शिर, भौंह, ठोडी, कान, कन्धा, छाती, हृदय (दोनों स्तनोंके बीचमें दो अंगुल परिमाण हृदयका है ) वंक्षण ( लिंग और अण्डकोषकी सन्धि ) वस्ति और जंघामें अनेक प्रकारकी वातपीडा, गाढी विष्टा, छींकका रुकना, धूपमें बैठनेकी इच्छा, कम्प, कण्ठ ओठका सूखना ॥ १८ ॥

वेगक्षोभोष्मादिषु वैषम्यमुदन्या
शोणास्निग्धं त्वङ्नखचक्षुर्मलमूत्रम् ॥
जृंभाध्माने शूलमथास्ये विरसत्वं
वातोद्भूते लिंगमितीदं ज्वरमुक्तम् ॥ १९ ॥

वेगक्षोभेति ॥ वेगः ज्वरस्य प्रवृत्तिः क्षोभो ज्वरस्य वृद्धिः तयोर्वैषम्यम् अनियतकालता ऊष्मणो वैषम्यं विषमता क्वचिदंगे महान्संतापः क्वचिदल्पमिति आदिपदेन मोचनवेदनयोर्ग्रहणम् । तत्र वेदनावैषम्यं कदाचिदल्पा कदाचिन्महती, कदाचिच्छिरसि कदाचित्पादयोरित्यादि । उदन्या पिपासा त्वगादीनां शोणास्निग्धत्वं भवति शोणं च अस्निग्धं च शोणास्निग्धम् आरक्तरूक्षम् । त्वक् त्वचा नखानि कररुहाणि चक्षुर्नेत्रं मलं विष्ठा मूत्रं प्रस्रावः एतेषां रक्तरूक्षत्वं च भवति । जृंभा च आध्मानं च शूलं च भवति । आस्ये मुखे विरसत्वं भवति । वातोद्भूते वातजनिते ज्वरे एतल्लक्षणं लिंगमुक्तम् ॥ १९ ॥

ज्वरकी प्रवृत्ति, ज्वरकी वृद्धि, ज्वरका सन्ताप और वेदना आदिकोंकी विषमता, प्यास लगना, त्वचा नख ( नाखून ) और नेत्र मल ( विष्टा ) मूत्र इनमें रक्तता और रूखापन, जंभाई, अफारा, शूल मुखमें फीकापन ये लक्षण वातसे पैदा हुए ज्वरमें कहे हैं ॥ १९ ॥

ज्वरे प्रथमतः प्रतप्तसलिलं
निवातनिलयं गुरूष्णसिचयम् ॥
यथामलबलं च लंघनमतो
भजेत्षडहतोऽपि तिक्तकरसम् ॥ २० ॥



पूर्वरूपादिना निश्चितस्य ज्वरस्य सामान्यतश्चिकित्सामाह-ज्वरे इति ॥ अत्र प्रथमत इति प्रतप्तसलिलमित्यादिकर्मचतुष्टयेन संबध्यते । यथामलेत्यादिक्रियाविशेषणं च सर्वत्र प्रथमतः उत्पत्तिदिनादारभ्य प्रकर्षेण तप्तम् । अग्निसंबंधात् क्वथितं सदुष्णं शीतं चेति यावत् । क्वथितशीते च प्रतप्तनिर्देशो भूतपूर्वगतया प्रशब्दश्च सूर्यांशुतप्तव्यवच्छेदार्थः । फेनिलं जंतुमत्तप्तमिति तत्पाननिषेधात् तादृशं सलिलं भजेत्, अल्पशः पिबेदिति यावत् । तदुक्तं-तृष्णागत्याल्पसुखाम्बु पिबेदिति । "अतियोगेन सलिलं तृष्यतेऽपि प्रयोजितम् ॥ प्रयाति श्लेष्मपित्तत्वं ज्वरितस्य विशेषतः" इत्यपि पाने दोषश्रवणाच्च प्रथमत इत्यनेन उत्पत्तिदिनेऽपि शीतं जलं न पेयमिति ज्ञाप्यते । तदुक्तं सुश्रुते-"सेव्यमानेन शीतेन ज्वरः स्रोतोगेन वर्द्धते" इति । संग्रहेऽपि-"अनवस्थितदोषाग्नेर्व्याधिक्षीणबलस्य च ॥ नाल्पमप्याममुदकं हितं तद्धि त्रिदोषकृत" इति वाग्भटेऽपि-" विपरीतमतः शीतं दोषसंघातवर्द्धनम " इति । अत उष्णोदकाद्विपरीतं दीपनपाचनत्वादिगुणशून्यमिति । अन्यत्रापि-" ज्वराणामेव सर्वेषां प्रथमं वातवर्जनम् ॥ लंघनं चोष्णपानीयमिति-धन्वंतरेर्मतम् " इति एतेन " ज्वरस्य प्रथमे स्थाने भेषजैर्दिनत्रयम् ॥ न देयं क्वथितं तोयं भेषजं न च रोगिणाम् " इति मतमप्रमाणमिति सूचितम् । अत एव " केचिद्वदंति तुर्येह्नि देयमुष्णजलं ज्वरे " इति । केचित्पदमस्वरससूचनाय । ननु ज्वरस्य मसूरिकाविस्फोटकादेः प्राग्रूपत्वात् त्रिचतुरैरहोभिस्तत्संभवाशंकानिवृत्तौ पेयमित्येतदर्थमिदमिति चेत् ज्वरमात्रे तच्छंकाया अभावात्, मसूरिकादावपि क्वथितनिषेधवचनाश्रवणाच्च । वैद्यसंप्रदायादिति चेद्वन्त तर्हि यत्राशंका तत्रैव न पेयमिति, इतरत्र तु आमादिपाचकत्वात्कुतो न पेयम् । तच्छंकायामिव सर्वत्र ज्वरे वैद्यसंप्रदायाभावाच्च । अस्तु वा मसूरिकादिज्वरविषयत्वेनोक्तवचनयोः प्रामाणिकत्वं तथापि नवज्वरमात्रे तत्सिद्धिरिति । वस्तुतस्तु मसूरिकादावपि सुवर्णादिक्वथितमेव हितमित्यग्रे वक्ष्यति । तथैव संप्रदायोऽपि तस्माद्युक्तमुक्तं प्रथमत इति । ननु प्रतप्तं जलं भजेदित्युक्तं तत्र-" अर्द्धावशिष्टं यत्तोयं तदुष्णोदकमुच्यते । अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा ॥ अथवा क्वथनेनैव सिद्धमुष्णोदकं पिबेत् ॥" तथा "त्रिपादशेषं सलिलं ग्रीष्मे शरदि शस्यते ॥ हिमेऽर्द्धशेषं शिशिरे तथा वर्षावसंतयोः ।" इति । प्रतपनस्यानेकविधत्वोक्तेः संदेह इत्यत

आह–यथेत्यादि । मलाः वातपित्तकफाः, अथ च आकारप्रश्लेषेण आमं लान्ति आददत एतादृशा आमसंबंधा इति यावत् । तादृशानां तेषां केवलानां संसृष्टानां च मलमनतिक्रम्येत्यर्थः । अत्रायमाशयः–" तत्पादहीनं पित्तघ्नमर्द्धहीनं तु वातजित् । त्रिपादहीनं श्लेष्मघ्नं संग्राह्यग्निप्रदं लघु ॥ " इति वचनात् । केवले पित्ते तदुल्बणे संयोगे च पादहीनम् । अत एव ग्रीष्मशरदोस्त्रिपादशेषमित्याद्युक्तिः । तयोः पित्तोल्बणसंयोगावश्यंभावात, ग्रीष्मादिशब्दानां यथायथं प्रकुपितदोषपरत्वात्, यथा सुश्रुते विशेषात यत्तु " निदाघे त्वर्द्धपादोनं पादहीनन्तु शारदम " इतिवचनम् । तत्पित्तोल्बणतरसंयोगविषयं नितरां दहती[illegible] निदाघपदनिर्देशात् । वस्तुतस्तु यथायथा क्थनाधिक्यं तथा तथा[illegible]त्वादाग्नेयगुणप्रकर्षो यथायथा च तदल्पत्वं तथातथा तन्निकर्षश्च जले युक्तिसिद्धम् । एवं च साधारणे सामतमे पित्ते पादहीनं, मध्यमे सामतरे त्वर्द्धपादोनम, उत्कृष्टतमे सामे च क्थनमात्रं सिद्धं, किंचिदामे च पाषाणादितापितमेव हितमित्याद्यूह्यम् । अत एव " क्थमानं तु निर्वेगं निष्फेनं निर्मलं तथा । तथा पाषाणमद्भेमजतुपाकार्कतापितम् ॥ " ( अत्र जतुपाको द्रवीकृता लाक्षा अर्कः सूर्यः ) " पानीयमुष्णं शीतं वा त्रिदोषघ्नं तृडर्तिजित् " इत्यादीनि वचनानि संगच्छन्ते । एषां पित्तोल्बणतारतम्यानुसरणं विना गत्यभावात, अन्यथा अनियमप्रसंगः अत एवात्र त्रिदोषघ्नं पित्ताधिकतमदोषत्रयघ्नमित्यर्थः । एतेन मसूरिकादावपि इदमेव देयमिति सूचितम् । न चात्र पित्तोल्बणतमतायामेव कुतो न हितमिति शंक्यं तस्यामदोषवर्द्धकत्वेन निषेधात्, अग्रे तापेन तद्दोषनिवारणाच्च । अत एव पाषाणादिद्वाराऽपि तदुपदेश इति । एवं वातेऽर्द्धहीने कफे त्रिपादहीनमिति । यत्तु वसंतेऽर्द्धशेषवचनं तत्तु वातोल्बणकफविषयम् । " अष्टमांशावशेषं तु वारि वर्षासु शस्यते । " इति च । सामश्लेष्मोल्बणकुपिततमवातविषयम् । अन्यथा हिमेर्द्धशेषमित्यादिना वर्षास्वर्द्धशेषोक्तिविरोधः, वस्व ८ ष्टांगेषु ६ बाण ५ वेदेषु ४ त्रिषु ३ पक्षयोः २ एकभागावशेषं स्यादंबु वर्षादियुक्तं क्रमात् षड्भागाष्टभागैकेषा युक्तिश्च सामवातकफोत्तरसंनिपातसंसर्गाणां तरतमभागसाम्यापकर्षविषया यथायथा भागावशेषबाहुल्यं तथा तथाग्नेयगुणानिकर्षसंभवात् । एवं चात्र वासंतेषु भागेष्वेकभागे शेषोक्तिः सामवातकफयोरीषदुल्बणताविषया । यदपि 'क्षीण-



पादत्रिभागार्द्धादेशतो गुरुलाघवात्' शेषोक्तिः इति संग्रहवचनं तदपि मलपर्यवसन्नं यथा सुश्रुते– " आनूपदेशादौ वर्षत्वाद्देशादिगौरववशात्रिभागार्द्धक्षीणस्य साधारणदेशे ऋतौ दोषोल्बणत्वे देशादिलाघववशात् क्षीणपादस्य पेयतावातुरव्यापितप्रसंग इति । स चेत स एव, अत्र प्रमाणन्तु " भिनत्ति श्लेष्मसंघातं मारुतं चापकर्षति । अजीर्णं जरयत्याशु पीतमुष्णोदकं निशि " इति वचनात् । अत्र ज्वरमात्रेऽष्टमेनांशशेषे सति वचनाद्वाष्टांशावशेषमुष्णस्पर्शमेव जलं तृडभावेऽपि पेयमिति कस्यचिन्मतं तच्चिंत्यं प्रमाणाभावात् । भिनत्तीत्यादेर्वातश्लेष्ममात्रविषयत्वस्य स्पष्टत्वात् । अष्टमेनेत्यस्य च बहुतरकफमात्रविषयत्वेन त्रिभागत्वाभावात् । अष्टम्वशेषादीनामपि क्थनप्रकाराणां संभवात् रात्रावष्टावशेषमेवेत्यत्र विनिगमकाभावाच्च । यदि च क्वाचित्कसंप्रदायात्तृडभावेऽपि पेयमित्याग्रहस्तर्हि सामवातकफयोरेव । नवज्वरमात्र इति । वस्तुतस्तु निशीत्यादि–"तृष्णागत्याल्पमुष्णांबु पिबेद्वातकफज्वरे" ॥ इत्यस्यैव विशेषसमर्पकं रात्रौ तृषिदिनापेक्षयाभ्यधिकमुष्णं पिबेत शीतसमयत्वादिति तदेव क्थितमपि वातकफयोः कोष्णं पित्ते तु शीतमिति यथामलबलमित्यनेनैव सूचितम् । तदुक्तं सुश्रुते–"मद्यपानात्समुद्भूते रोगे पित्तोद्भवे तथा ॥ सन्निपातसमुत्थे च शृतशीतं प्रशस्यते" इति । अत्र सन्निपातः पित्तोल्बण एव, वाग्भटेऽपि–"उष्णमेव गुणत्वेऽपि–युज्यान्नैकांतपित्तले । उद्रिक्तपित्ते वमथुदाहमोहातिसारिणि । विषमद्योत्थिते ग्रीष्मे क्षतक्षीणेऽस्रपित्तिनि ॥ घनचंदनशुंठ्यंबुपर्पटोशीरसाधितम् ॥ शीतं तेभ्यो हितं तोयं पाचनं तृड्ज्वरापहम्" इति । षडंगोदकं तूल्बणपित्तप्रकृतिसंबंधिपित्तज्वरादिविषयम् । "मुस्तपर्पटकोशीरनागरोशीरचंदनैः ॥ शृतं शीतं जलं दद्याद्दाहतृड्ज्वरशांतये" इति । सुश्रुते शृतशीतादिति पृथग्विषयभेदेन निर्देशात, अत एव न शृतशीतषडंगोदकयोरैच्छिको विकल्प अत एव च ग्रन्थकृत रुखाहचिकित्सायाः षडंगोदकं वक्ष्यति । अत्र तत्रांतरोक्तविशेषः–शृतोंबु तत्त्रिदोषघ्नंयदंतर्बाष्पशीतलम् । " अंतर्बाष्पं पिहितमेवशीतलमिति यावत । "धारापातेन विष्टंभि दुर्ज्जरं पवनाहतम् । दिवाशृतं पयो रात्रौ गुरुतामधिगच्छति । रात्रौ शृतं दिवा पीतं गुरुत्वमधिगच्छति । शृतशीतं पुनस्ततं तोयं विषसमं भवेत् । हेमंतशिशिरे चांबु सारसं वा तडागजम् । " सरस्तडागयोर्दैवनरकृतत्वाद्भेदः । "वसंतग्रीष्मयोः कौपं वाप्यं वा नैर्झरं हितम् ।

नादेयं वारि नादेयं वसंतग्रीष्मयोर्बुधैः ॥ विषवत्पत्रपुष्पादिदुष्टनिर्झरयोगतः ॥ औद्भिदं वांतरिक्षं वा कौप्यं वा प्रावृषि स्मृतम् ॥ कार्तिके मार्गशीर्षे च पयोमात्रं प्रशस्यते ॥ पानीयं न च पानीयं पानीयेऽन्यप्रदेशजे ॥ अजीर्णे क्वथितं चामे भुक्तेऽजीर्णे च नेतरत् ॥ शीते विधिरयं तप्ते त्वजीर्णे शिशिरं त्यजेत् ॥" अस्यायमर्थः–अन्यप्रदेशजे कौपादौ पानीये पक्के वा पीतेऽजीर्णे सति अन्यप्रदेशजं तडागजादिकं पक्कमपक्कं वा न पेयं किंतु कौपादिकमेव। जीर्णे तु तडागजाद्यपि पेयम् । तथा आमे अपक्के जले पीते जीर्णे सति क्वथितम्। उष्णं शीतं वा सजातीयमपि न पेयम्। किंतु आममेव जीर्णे तु पक्कमपि तथा पक्के क्वथिते जीर्णेऽपीतरत्, आमं सजातीयमपि न पेयमाप्रकृतिभोजनादिति च संप्रदायादवधेयम् । अयं विधिः शीते । अयमित्यनेन पक्केत्यादेः परामर्शः शीतीभूते एव पक्के निषेधः । तथा च क्वथितोष्णमपि प्रकृतिभोजनात्प्राक्पेयम्, अनंतरं तु, अपक्कमपि तदवधारणे तप्ते पक्कोष्णे अजीर्ण एव शिशिरं पक्कमपक्कं वा सजातीयमपि शीतं न पेयं जीर्णे तु पेयमिति । " आमं जलं पाकमुपैति यामं पक्कं पुनः शीतलमर्द्धयामम् ॥ पक्कं कदुष्णं च ततोर्धकालं कालात्त्रयः पीतजलस्य पाके॥" इति। न केवलं प्रथमतः प्रततसलिलमेव भजेत् किंत्वन्यदपीत्याह–निवातेत्यादि । निवातनिलयं गृहं भजेत् अधिवसेत्। तदुक्तम्–"सामान्यतो ज्वरी पूर्वं निर्वातनिलयं वसेत्॥ निवातमायुषो वृद्धिमारोग्यं कुरुते यतः" इति । निर्वातं बाह्यवातसंचाररहितमिति यावत् । तेन निर्वातवासेऽपि यथाप्रकृत्यादि सात्म्यं वस्त्रादिव्यजनानिलाविधेयसूचितम् । यदुक्तम् " तालवृंतभवो वातस्त्रिदोषशमनो मतः ॥ चामरो वस्त्रसंभूतो मारुतो वेत्रजस्तथा ॥ एते दोषजितो वाताः स्निग्धा हृद्याः सुपूजिताः ॥ वंशव्यजनजः सोष्णो रक्तपित्तप्रकोपनः" इति । अत्र यथामलेत्यादिना च पित्तजे किंचिन्निवातं कफवातयोश्च तरतमभावेनेत्युक्तम्। तथा गुरु स्वतः कार्पासादिभरणेन वा गौरवमुक्तम्। उष्णं सिचयं वस्त्रं भजेत् आस्तृणुयात्प्रावृणुयाच्चेति यावत् । उष्णेति शीतमात्रगुणशून्यपरम् " आविकाजिककौशेयमुष्णं क्षौमं तु शीतलम् ॥ शीतोष्णं तूलसंतानकार्पासस्नावल्कजम् " इत्युक्तं गुणेषु शीतमात्रगुणत्वात् क्षौमस्यैव निषेधो न तु शीतोष्णस्य कार्पासस्य शीतमात्रगुरुत्वाभावात् । न चैवं क्षौमस्य वातकफयोर्युक्तो निषेधः पित्ते कुत इति । वाच्यम् । आमज्वरे शीतोपचारस्य तद्वर्धकत्वेन निषेधात्। अत्रापि यथेत्यादिना पित्तज्वरे कार्पासादिकं वल्कलं वा।



तत्रापि प्रावरणार्थमीषद्गुरुः इतरेषु च यथाप्रकृत्यादिसात्म्यम् आविकादि कार्पासादि च सूचितम् । तथा प्रथमतः पूर्वरूपस्य रूपस्य वोत्पत्तिदिनमारभ्य च लंघनं भजेत्। यत उक्तम्–" आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधापयन् । विदधाति ज्वरं दोषस्तस्मात्कुर्वीत लंघनम् ॥ प्राग्रूपेषु ज्वरादौ वा " इति । चकारः प्रततसलिलादीनां यौगपद्यार्थः । अत एव प्रततजलपाने वातरक्षणादिप्रसिद्धः । न चैवं क्रियासंकरदोषः तस्य कषायादिभेषजपानाविषयत्वात्, अत्र च लंघनपदेनोपवास एव । " आनद्धः स्तिमितैर्दोषैर्यावंतं कालमातुरः ॥ तावत्त्वनशनं कुर्यात्ततः संसर्गमाचरेत् " अत्र संसर्गः पेयादिक्रमः इति सुश्रुतोक्तेः प्रसिद्धश्च । न तु " चतुःप्रकारा संशुद्धिः पिपासातपमारुतौ।" पिपासा जलपाननियम इति यावत् । " पाचनान्युपवासश्च व्यायामश्चेति लंघनम् ॥" इति पारिभाषिकं लंघनं पारिशेषं च । लंघनमिति वाग्भटोक्तेनोपवासपिपासावमनातिरिक्तलंघनानां निषेधात्, तत्रापि प्रततेत्यादिना पिपासाया उक्तत्वात्, वमनस्य त्ववस्थाविशेषे प्रशस्तत्वात्। यत उक्तं वाग्भटे– " तत्रोत्क्लिष्टे समुत्क्लिष्टे कफप्राये चले मले ॥ सहृल्लासप्रसेकान्नद्वेषकासविसूचिके ॥ सद्यो भुक्तस्य संजाते ज्वरे सामे विशेषतः ॥ वमनं वमनार्हस्य शस्तं कुर्यात्तदन्यथा ॥ श्वासातीसारसंमोहहृद्रोगविषमज्वरान् ॥ " अन्यत्रापि " वमितं लंघयेत्प्राज्ञो लंघितं न तु वामयेत् " इति । यत्तूक्तं सुश्रुते– " ज्वरस्य पूर्वरूपेषु वर्तमानेषु बुद्धिमान् ॥ पाययेत्सर्पिरच्छं तु ततः स लभते सुखम् ॥ विधिर्मारुतजेष्वेष पित्तजेषु विरेचनम् ॥ मृदुप्रच्छर्दनं तद्वत्कफजेषु विधीयते ॥ सर्वं त्रिदोषजेषूक्तं यथादोषं विकल्पयेत् " इति । तद्धि पूर्वरूपमात्रेण सम्यग्दोषस्याज्ञानाद्देशकालप्रकृतिसात्म्यादिसापेक्षमिति विरलप्रचारं तदज्ञाने सापायं च। उपवासस्तु न तथेति, तं च यथामलबलं कुर्यात् मलानां सामप्रकुपितानां दोषाणामभावः । अमलमित्यत्रार्थाभावे अव्ययीभावः । " नलोपो नञः " इति नलोपः। अमलं च बलं च ते अनतिक्रम्येति पुनरव्ययीभावः । एतेन पाकमुक्तिदशयोर्दोषाणां निरामत्वेन निःप्रकोपत्वेन लंघनस्य मलाभावरूपफलसिद्धिस्तदन्यतरावधिता बलाविरोधिता च सूचिता । यदुक्तं वाग्भटे–" कृतेऽकृते वा वमने ज्वरी कुर्याद्विशोषणम्॥ दोषाणां समुदीर्णानां पाचनाय शमाय च ॥ " इति । अत्र शमस्योत्तरनिर्देश-

स्तदवधेः प्रशस्ततया, तत्सूचनार्थः स च ज्वरमुक्तिवेद्यः । यदुक्तं तत्रैव– "लंघनैः क्षपिते दोषे दीप्तेऽग्नौ लाघवे सति ॥ स्वास्थ्यं क्षुत्तृड्रुचिः पक्तिर्बलमोजश्च जायते ॥" इति । स्वास्थ्यं ज्वरमुक्तिः । अत एव सुश्रुते–आनद्धस्तिमितैरित्याद्युक्त्वा "वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे ॥ हृदयोद्गारकंठास्यशुद्धौ तंद्राक्लमे गते ॥ स्वेदे जातेऽरुचौ चापि क्षुत्पिपासासहोदये ॥ कृतं लंघनमादेश्यं निर्व्यथे चांतरात्मनि ॥" इति । क्षुत्पिपासासहोदय इति–क्षुत्पिपासयोर्युगपदुदयः, क्षुत्पिपासयोरसह्य उदय इति चक्रेण व्याख्यातम् । ज्वरमुक्तिवत्सम्यग्लंघनस्य लक्षणपाठास्तदेकगम्य एव दोषानद्धताशम इति ज्ञापनार्थः । ज्वरमुक्तिलक्षणं चरके स्पष्टम्–"वातिकः सप्तरात्रेण दशरात्रेण पैत्तिकः। कफजो द्वादशाहेन ज्वरः शांतिं समृच्छति" इति । शमावधिकालप्रदर्शनं च प्रायिकं दोषस्याल्पत्वबहुत्वाभ्यां सप्ताहादितोऽर्वागूर्द्ध्वं च तद्दर्शनात् । यत्तु संग्रहे– "ज्वरे पेया कषायाश्च सर्पिः क्षीरं विरेचनम् ॥ षडहे षडहे युंज्याद्वीक्ष्य दोषबलाबलम् ॥" षडहे जाते सतीत्यर्थादित्यनेनार्थतः प्रथमषडहे लंघनविधानं तत् षडहानंतरं लंघनकरणे प्रायशो बलहानिर्भवतीति ज्ञापनार्थम् । नत्वास्वस्थलंघननिषेधपरं समर्थस्य तत्पूर्वं तद्विच्छेदस्य दृष्टानिष्टफलत्वात् उक्तवचनस्य सद्विषक्संप्रदायविरोधाच्च । अत एव वाग्भटे–"सज्वरं ज्वरमुक्तं वा दिनांते भोजयेल्लघु" इति । पृथग्ज्वरमुक्तमप्युद्दिश्य पथ्यकालविधिरिति दिक् । पाकं विना शमस्यासंभवात्तेनैव गतार्थत्वे पाचनायेति च पाकपर्यंतं लंघनस्यावश्यकर्तव्यतासूचनार्थम् । अत एव शमक्षय चेत्युक्त्वापि पुनराह वाग्भटाचार्यः–"आमेन भस्मनेवाग्नौ छन्नेऽन्नं न विपच्यते ॥ तस्मादादोषपचनाज्ज्वरितानुपवासयेत्" इति । तल्लक्षणं सुश्रुते–"मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च । पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम्" इति । तत्संभवश्च प्रायशः प्रथमषडहेन, एतदेवाभिप्रेत्योक्तं चरके "ज्वरितं षडहेऽतीते लघ्वन्नं प्रतिभोजितम्" इति । संग्रहेऽपि–ज्वरे पेया इत्यादि । यत्तु "सप्ताहेनैव पच्यंते सप्तधातुगता मलाः" इत्युक्तं तदुपपत्तिमात्रप्रदर्शनमर्वागपि तत्संभवदर्शनात् । षष्ठसप्तमाहयोरनतिदूरांतरत्वान्न विरोधोऽपि । यदपि "वातिकः सप्तरात्रेण दशरात्रेण पैत्तिकः ॥ श्लैष्मिको द्वादशाहेन ज्वरः पाकं समृच्छति ॥" इति, तद्धाताद्युल्बणसंततविषयमिति तत्प्रकरणे निरूपयिष्यति । वस्तुतस्तु ज्वरमार्दवादिलक्षणकोन्नेय एव दोषस्तत्का-



लविवरणपराणि चैतानि वचनानीति ध्येयम् । बलेति–लंघनकृतान्त्ये तु बलहानौ दोषपाकमपि न प्रतीक्ष्येतेति ज्ञापनाय । यदुक्तम्–"बलाविरोधिना चैनं लंघनेनोपपादयेत् । बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः" इति । तदनेन प्रपंचेन त्रिविधं लंघनमुक्तम्–आज्वरमुक्ति, आदोषपाकम् । आतदवधि चेति । तच्च यथाक्रममुत्तममध्यमाधमबलविषयं बलाविरोधिनेत्याद्युक्त्या तथा प्रतिपादनात्, तत्रेदं द्वयं सम्यक् लंघनं वातमूत्रेत्यादिसुश्रुतवचनात् । वाग्भटेऽपि "व्याधिमार्दवमुत्साहस्तंद्रानाशश्च लंघिते" इत्यनेन ज्वरमार्दवसुलंघितलिंगत्वेनोक्तेश्च । एवं च तद्विषयो यथा स्वतो लिंगोदय एव सम्यग् लंघितः किंतु मध्यमबल एव । पाकलिंगोदयात्सोऽपि तत्पूर्वत्वसम्यग्लंघितः । "तत्र सामज्वराकृत्या जानीयादविशोषितम् ॥" इत्युक्तेः, अत एवांत्यमसम्यग्लंघनमिति दिक् । भेषजपानकालमाह–'अतः षडहतोऽपि तिक्तकरसम्' इति । अतः प्रथमदिनात् षड्–अहानि समाहृतानीति षडहस्तस्मात् षडहतः सप्तमाहमारभ्येति यावत् । यदुक्तं सुश्रुते– "सप्तरात्रात्परं केचिन्मन्यंते देयमौषधम्" इति । न चैवं विरोधः, सप्तमाष्टमाहयोर्विषयभेदस्य निरूपयिष्यमाणत्वात्, अनतिदूरांतरत्वाच्च । अपिरनुक्तसमुच्चये । तेन दशाहैकादशाहयोः षडहानंतराहाणां संग्रहः, यदुक्तं वाग्भटे–"सप्ताहादौषधं केचिदाहुरन्ये दशाहतः" इति । सुश्रुते च–"दशषडहादामोल्बणतायामपि" तदा प्रसंगेन चेष्टापत्तिः । अपक्वावस्थारूपायां "दोषेऽथवाऽतिनिचिते तंद्रास्तैमित्यकारिणि ॥ तीव्रज्वरपरीतस्य दोषवेगोदये यतः ॥ अपच्यमानं भेषज्यं भूयो ज्वलयति ज्वरम्" इति पच्यमानरूपावस्थायां च तस्यां तद्द्व्यापत्त्युक्तेः । अत एव वाग्भटे–सप्ताहादिमतान्युपन्यस्य निषेधमुखेन आमोल्बणताक्षयरूपदोषपाकानंतरकालो भेषजकाल इति सिद्धान्तः । अत एवोक्तम्–"अचिरज्वरितस्यापि" इति । तत्र सप्ताहादिमतोपन्यासस्तु तत्संभवकालविवरणपर एव । एवं च यदा षडहादिना दोषपाकस्तदातस्यादिममारभ्य देयम् । यदा तु द्व्यहादिनातदा तृतीयादिदिनमारभ्यापित्वेकवाक्यतासंभवान्न विरोधापत्तिः । केचित्तु । "पैत्तिके वा ज्वरे देयमल्पकालसमुत्थिते ॥ अचिरज्वरितस्यापि भैषज्यं दोषपाकतः" इति सुश्रुतोक्तेः । सप्ताहादर्वाग्दोषपाके सति भेषजं पैत्तिक एव ज्वरे देयं न वातजादौ सप्ताहादिवचनैः पैत्तिकातिरिक्ते तदाह तारतम्ये

च तस्य "दशरात्रात्परं केचिद्दातव्यमिति निश्चिताः" निश्चिताः निश्चयकारिणो वैद्याः। हारीतोक्तिति–"एतां क्रियां प्रयुंजीत षड्रात्रं सप्तमेऽहनि" एतां पेयादिकां पिबेत् कषायसंयोगान् ज्वरघ्नान् साधुसाधितान् इति। वस्तुतस्तु षडहतोऽपीति पाकोपलक्षणं प्रायशस्तेन तत्संभवात्। उक्तं च सुश्रुते–'मृदौ ज्वरे' इत्यादि 'ज्वरे देयं तदौषधम्' इति च। वाग्भटेऽपि "ततः पक्वेषु दोषेषु लंघनाद्यैः प्रशस्यते ॥ कषायो दोषशेषस्य पाचनः शमनो यथा" इति। तथा "मृदुज्वरो लघुर्देहश्चलिताश्च मला यदा ॥ अचिरज्वरितस्यापि भेषजं योजयेत्तदा" इति। दोषपाकश्च "लंघनं स्वेदनं कालो यवाग्वस्तिक्तको रसः॥ पाचनान्यविपक्वानां दोषाणां तरुणज्वरे" इत्युक्तदिशा अत्र यवाग्वतिलयुतमंडपरं, तेन मंडयूषयोरपि संग्रहः। एतच्च निषिद्धलंघनसम्यग्लंघनानर्हविषयम्। तिक्तो रसः पेयादिसंस्कारद्वारैवामोल्बणे स्वातंत्र्येण निषेधात्। अविपक्वानामामोल्बणानामिति यावत्। तरुणेत्यनेन गतार्थमप्येतद्ग्रहणमष्टाहादितरुणेप्यामोल्बणत्वात्तुवृत्तौ लंघनादिसूचनार्थम्। एवं च दोषपाकमंतराहमारभ्येत्यर्थः। अवश्यं चैतदभ्युपेयमन्यथा षडहादामोल्बणतायासेऽपि तद्दानप्रसंगः, न चेष्टापत्तिः 'दोषे वात्यर्थनिचिते तंद्रास्तैमित्यकारिणि' इति।अपक्वावस्थारूपायां "तीव्रज्वरपरीतस्य दोषवेगोदये यतः" इति पच्यमानावस्थारूपायां च। तस्याम् "अपच्यमानं भैषज्यं भूयो ज्वलयति ज्वरम्" इति तद्व्यापत्त्युक्तेः। अत एव वाग्भटे सप्ताहादिमितान्युपन्यस्य निषेधमुखेन आमोल्बणताक्षयरूपदोषपाकानंतरकाल एव भेषजकाल इति सिद्धांतितम्। न चैवं षडहादर्वागपि दोषपाकेन तद्दानापत्तिः, इष्टापत्तेः। अत एवोक्तम्। अचिरज्वरितस्यापीति। तत्र तत्र सप्ताहादिमितोपन्यासस्तु तत्संभवकालविवरणपर एव। एवं च यदा षडहादिना दोषपाकस्तदा सप्तमादिदिनमारभ्य देयं, यदा तु द्व्यहादिना तदा तृतीयादिदिनमारभ्यापि त्वेकवाक्यतासंभवान्न विरोधोपि। केचित्तु "पैत्तिके वातज्वरे देयमल्पकालसमुत्थिते ॥ अचिरज्वरितस्यापि भैषज्यं दोषपाकतः ॥" इति सुश्रुतोक्तेः। सप्ताहादर्वाग्दोषपाके सति भेषजं पैत्तिक एव ज्वरे देयं न वातजादौ, सप्ताहादिवचनैः पैत्तिकातिरिक्ते तद्दिनमारभ्यैव तस्य व्यवस्थापनात्। अयं तु विशेषः। पाचनं सप्तमाहाद्यारभ्य त्रिदिनं दत्त्वाद्यारभ्य शमनं देयमित्याहुस्तच्चिंत्यं, पैत्तिक इत्यादिना। दोषपाकस्यैव तदर्वाक् तद्दानबोधनात् तस्य च वातजादावपि तुल्यत्वात्, तद्विशिष्टपैत्तिकत्वस्य



तच्चेदल्पकालेत्यादिना गतार्थत्वाच्चाऽचिरेत्यादेर्वैयर्थ्यापत्तिः। नच पैत्तिके सोऽचिरादेव भवतीति स्वरूपकथनमिदमिति वाच्यं प्रमाणाभावात्, 'दशरात्रेण पैत्तिकः' इत्युक्त्या प्रत्युत विलंबप्रतिपादनाच्च। किंच वाशब्दोऽत्र इवार्थः, तेन अल्पकालजे पित्तज्वर इवाऽचिरवातादिज्वरितस्यापि दोषपाके सति भेषजं देयमित्यर्थः, अन्यथा वैयर्थ्यदोषः, अत एव डल्हणेन वाशब्दाद्वातश्लेष्मज्वरे इति विवृत्तं, वाग्भटे च सामान्यमभिप्रेत्योक्तं मृदुर्ज्वर इत्यादि। नन्वेवं पाचनविधिवैयर्थ्यं दोषपाके सति तदा तस्य पिष्टपेषणतुल्यत्वादिति चेन्मैवं, मधुभांडावलेपन्यायेन कोष्ठस्थितामशेषपचनार्थत्वात्तथाहि–इह आमता द्विविधा एका दोषस्य तरुणतारूपा ज्वरतीव्रतागम्या इयमेव वाग्भटादिभिरामोल्बणतेति व्यवह्रियते सा च प्रायः षडहेनापैतीति प्रागुक्तम्। द्वितीया तु रसस्य मुखवैरस्यतृष्णारोचकादिलक्षणा, सा च सप्ताहात्परतोऽपि दोषबाहुल्यकृतादग्निमांद्यादनुवर्तते। तदुक्तम्–"श्लेष्मलानामवांतानां ज्वरः प्रायः कफाधिकः॥" अवांतानामकृतवमनानां परिपाकं न सप्ताहेनापि याति। मृदूष्णेति–इयमेव हि दोषशेष इति। तत्पाचनाय तु पाचनमावश्यकं तदुक्तं सुश्रुते–"बहुदोषस्य मंदाग्नेः सप्तरात्रात्परं ज्वरे। लंघनान्ते यवागूभिर्यदा दोषो न पच्यते" अत्र लंघनेत्युत्तमबलविषयं यवाग्विति च पूर्ववत्। "तदा तं मुखवैरस्यतृष्णारोचकनाशनैः। कषायैः पाचनैर्हृद्यैर्ज्वरघ्नैः समुपाचरेत्" इति। एतेन सत्यपि लंघनादौ कषायस्य प्राधान्येन दोषशेषपाचनार्थत्वं ज्वरशमनार्थत्वं चोक्तिः। अयं तु विशेषः उत्तमबलं लंघनांबुभिः सह इतरं तु अंबुयवागूभिः सह कषायैरुपाचरेदिति तत्सिद्धमेतदामज्वरलिंगानामीषदनुवृत्तौ पाचनं निवृत्तौ शमनमिति। उक्तं च "सप्ताहात्परतोऽस्तब्धे सामे स्यात्पाचनं ज्वरे ॥ निरामे शमनं स्तब्धे सामेनौषधमाचरेत्" इति। स्तब्धता चात्रोल्बणता सप्ताहादिति च प्रायस्तत्क्षयसंभवकालप्रदर्शनं नत्वास्वास्थ्यलंघनविधिपक्षे, कथमेतत् "पीतांबुर्लंघितः क्षीणोऽजीर्णी भुक्तः पिपासितः" मध्ये लंघनपाचनमिति मध्यानुरोधेन लंघितपदेनात्र सम्यग्लंघितस्यैव ग्रहणात् डल्हणेन तथा व्याख्याततत्वाच्च। दोषपाकानंतरं लंघनीयोप्युत्तमबलश्चेत् स्वास्थ्यलिंगीभावेन सम्यग्लंघितत्वाभावस्योक्तत्वात्। "ज्वरादौ लंघनं पथ्यं ज्वरमध्ये च पाचनम्" इत्युक्तेश्च। अत्र हि

चकारेण मध्ये लंघनपाचनमिति निदर्शनं तंत्रयुक्तिसिद्धलंघनसमुच्चयार्थम्, अत एव जीर्णौषधेऽन्ने पेयाद्यमाचरेदिति वाग्भटवचने आचरेदेवेति न नियमविधिः किंतु यदि पीतौषधः पेयाद्यमाचरेत्तर्हि जीर्णौषध एवेति। एवं च उत्तमबलस्य दोषपाकानंतराहमारभ्यैव पाचनं तच्च प्रायः सप्तमाहम्, तदप्यशेषेणामज्वरलिंगनिवृत्तिपर्य्यंतमेव ततश्च शमनमाज्वरमुक्त्येवेति ध्येयम्। आदोषपाकलंघनविधिपरे तु तदनंतराहे मध्यमबलज्वरमार्दवादिलिंगसत्त्वात्सुलंघितत्वेन भेषजनिषेधात्। लघ्वन्नमेवाल्पं भोजयित्वानंतराहत एव तत स च प्रायोऽष्टमाह "पाचनं शमनीयं वा कषायमुपयोजयेत्॥ ज्वरितं षडहेऽतीते लघ्वन्नं प्रतिभोजितम्" इति चरकोक्तेः। अत्र हि सप्तमे लघ्वन्नप्रतिभोजितमर्थादष्टमे कषायमुपयोजयेदिति टीकाकारैर्विवृतम्। अस्याश्च नास्वास्थ्यलंघितविषयत्वाज्ज्वरितमिति निर्देशात्, तस्य पाचनादिपानवैयर्थ्याच्च लंघनकृतलंघनबलहानिवशाद्भेषजवेगाऽसहिष्णुतायां च षडहपेयादि दत्त्वानंतराहतः। वाग्भटे "इत्ययं षडहो नेयो बलं दोषं च रक्षता" इति पठितत्वात्ततः पक्वेष्वित्याद्युक्तेः उदाहृतहारीतवचनाच्च, स च प्रायस्त्रयोदशाहतः ज्वरे पेयाः कषायाश्चेत्याद्युक्तेः। केचित्तु सर्वत्र तंत्रे पेया षडहप्राथमिक एव तद्विधे लंघनानर्हविषयत्वमुपवासविध्यन्यथानुपपत्तेः। एवं सप्तमाहमारभ्य सर्वत्र कषाय इत्याहुः तच्चिंत्यं, वाग्भटे युक्तलंघितलिंगैश्चेत्युपक्रम्य पेया षडहाभिधाना तस्य च प्राथमिकत्वे प्रकरणविरोधात्। नन्वेवं पाचनमित्यादौ षडहेऽतीते इत्यस्यावृत्त्या कषायमुपयोजयेदित्यत्रान्वय इति तदेकवाक्यतासंभवात्। मध्यमबलस्याष्टमाहे भेषजदानप्रमाणमिति चेन्मैवं सप्तरात्रात्परमित्युक्तेर्निर्विषयत्वापत्तेः, पाचनादीन्यभिधाय जीर्णौषधोऽन्नं पेयाद्यमित्युक्तौ पेयेत्यस्यासंगतेश्च वक्ष्यमाणदिशा षडहेन रसौदनपर्यंतं पथ्यनिष्पत्तौ पुनः पेयादेरनौचित्यात्, आस्वास्थ्यकृतलंघनस्य पाचनाद्यनर्हत्वात्षडहेऽतीते इत्यादेरष्टमाहपरत्वेनाभियुक्तव्याख्यानाच्च। तस्माद्युक्तैव व्यवस्थेत्यष्टमाहे भेषजं तद्वेगसहिष्णोरेवेति। निषिद्धलंघनस्य तु षडहमसम्यग्लंघनार्हस्य च तच्छेषदिनानि पेयादिना दोषं विपाच्य सप्तमाहतः पाचनाद्येतत्सर्वमभिप्रेत्याह–तिक्तकरसमिति। तिक्तः रसवहात्मनां पाचनशमनानां भेषजानां रसं स्वरसकल्कक्वाथहिमफांटभेदात्पंचविधं कषायं यथादोषं यथाबलं च यस्मिन्दोषे यो वक्ष्यमाणः यस्य यया कल्पनया यया मात्रया च न बलहानिस्तस्य तया चेति यावत्, भजेत पिबेत। तिक्ते-



त्यनेन ज्वरमात्रे पित्ताऽविनाभावात्तिक्तस्य च पित्तघ्नत्वात्प्राधान्यं सूच्यते। तेन सर्वत्र स प्रयोज्यः। कटुकादिस्तु क्वचित्तत्सांहित्येनैवेति ध्येयम्। तदुक्तं वाग्भटे–"तिक्तः पित्ते विशेषेण प्रयोज्यः कटुकः कफे" इति। षडहत इत्यत्र तद्धितार्थोत्तरपदसमाहारे चेति समासे राजाह इति टचि "न संख्यादेः समाहारः" इत्यह्नादेशनिषेधे अह्नष्टखोरेवेति टिलोपे पंचम्यास्तसिल्॥२०॥

ज्वरके आगमन समयसे ही अग्निपर औटायाहुआ जल पिलाना चाहिये। वायुरहित स्थानमें रहना भारी ( रुई वगैरहको सौड ) और गरम वस्त्र ओढना तथा पहरना चाहिये। दोष और बलके अनुसार लंघन करना चाहिये। लंघनोंके छः दिन बीतनेपर सातवें दिन हलका अन्न भोजन कराकर आठवें दिन तिक्त कषायवाली पाचन और शमन औषधी देना चाहिये॥ २०॥

न लंघयेन्मारुतजे ज्वरेऽथ क्षयोद्भवेऽतिक्षुधि मानसे च॥
न गुर्विणीदुर्बलबालवृद्धभीरूंस्तृषार्त्तानपि सोर्द्ध्ववातान्॥२१॥

न लंघयेदिति॥ केवलं वातज्वरे लंघनं न कुर्यात् शास्त्रदर्शनाद्ग्रंथबाहुल्यभयात्र लिख्यते। क्षयोद्भवे धातुक्षयजे ज्वरे च अतिक्षुध्यतिक्षुधातुरे न, मानसे भूतप्रेतपिशाचादिदोषजे ज्वरे न योज्यं, गुर्विणी गर्भवती न, दुर्बलं न, बालम् आषोडशावर्षाद्बालः तं न लंघयेत्, वृद्धं सप्ततेः परं न, भीरुं कातरं न, तृषार्त्तम् अतितृषायुक्तं न, सोर्द्ध्ववातं उद्गारयुक्तं न। उक्तं च "भुक्तेऽभुक्तेऽथवा सुप्ते येनोद्गारो भवेद्भृशम्॥ तदूर्द्ध्ववातमित्याहुः सोदानव्यानसंभवम्" इति॥ २१॥

वातज्वर, धातुक्षय ज्वर, अत्यन्त क्षुधा ( भूख ) से आतुर, मानस ज्वर ( भूत प्रेत पिशाच कामादि ज्वर ) गर्भिणी स्त्री, कमजोर, बालक ( सोलह वर्ष पर्य्यन्त बाल्याअवस्था होतीहै ) वृद्ध ( सत्तर वर्षके उपरान्त वृद्धाअवस्था होतीहै. परन्तु इस समय तो ५० पचास वर्षके उपरान्त ही वृद्ध होजाते हैं ) डरपोक, अत्यन्त प्यासयुक्त, और ऊर्ध्ववातवाले ( जिसको भोजन और शयनके समयमें भी बहुत डकार आतीहों उसको ऊर्ध्ववात कहतेहैं ) पुरुषको लंघन न करना चाहिये॥ २१॥

मुद्गान्मसूरांश्चणकान्कुलत्था-
न्मकुष्ठकान्पाचनयूषहेतून्॥
हितानिहाहुर्विहितां च पेयां
देयां यवागूमपि पाचनैः स्वैः॥ २२॥

अतः परं पथ्यमाह-मुद्गानिति॥ पाचनयूषहेतून् पाचनानां दोषशेषस्य पाचनद्वारा शमनानां हेतून्प्रकृतिभूतान् मुद्गादीन् हितान् पथ्यान् आहुर्बुधाः कथयंति । पश्चात्पेयां देयां यवागूमपि । कीदृशीं यथायथं वातज्वरादिषु वक्ष्यमाणैः पाचनैः तत्काथकल्पसाधितामिति तादृशां पेयां यवागूं वा विहितां कृतां देयाम् ॥ २२ ॥

पाचनद्वारा दोषको शमन करनेवाले हितकारी मूंग, मसूड, चना, कुलत्थी, मोठ इनके यूष पथ्य हैं। वातज्वरमें कहीहुई पाचन औषधियोंके काथसे सिद्ध कीहुई पेया और यवागू हितकारक कही हैं ॥ २२ ॥

### वातज्वरकी चिकित्सा ।

जठरानलमंदत्वं जेतुं वातज्वरभवा रुजोऽनंताः ॥
पिबतु हि नेतरपयसा रजनीघननीरनागरानंताः ॥ २३ ॥

वातज्वरनाशनमौषधं वक्ति जठरेति ॥ जठरानलमंदत्वं जेतुम् अत्यर्थं क्षुद्बोधनार्थम्-अनंता बहुलाः वातज्वरभवाः वातज्वरोद्भूता रुजः पीडाः शूलादीनि जेतुं दूरीकर्तुं त्वम् एतदौषधं पिब । प्रेरणार्थे लोट्मध्यमैकवचनम् । केन, तुहिनेतरपयसा उष्णोदकेन । पयसेत्यनेन चूर्णकल्पना सूचिता । तदौषधमाह रजनी हरिद्रा घनो मुस्तं नीरं वालकं नागरं शुण्ठी अनंता यासः ॥ २३ ॥

मन्दाग्निको दूरकरनेके लिये तथा वायुसे उत्पन्न हुई अत्यन्त वातज्वरकी शूल आदिक पीडाओंके दूर करनेके लिये हलदी, मोथा, नेत्रवाला, सोंठ, जवासेकी जडका चूर्ण गरम जलके साथ पीना चाहिये ॥ २३ ॥

श्रीपर्णीतर्कारीश्रीफलटिंटुकपाटलामूलैः ॥
पाचनमुदितं मारुतजनितज्वरहारि वारिणि क्वथितैः ॥२४॥

श्रीपर्णीत्यादि ॥ श्रीपर्णी गंभारी तर्कारी अग्निमंथः श्रीफलो बिल्वः टिंटुकः अरलु पाटला वसंतदूती एतेषां मूलैः वारिणि उदके क्वथितैः मारुतजनितज्वरहारि वातोद्भवज्वरनाशनमुचितं योग्यम् ॥ २४ ॥

गम्भारी, अरणी, बेलगिरी, अरलू, पाढर इनकी जडोंका जलमें कियाहुआ काढ वातज्वरको दूरकरनेवाला पाचन है ॥ २४ ॥



विश्वामृताग्रंथिकसिद्धतोयं मरुज्ज्वरः स्यात्पिबतः कुतोऽयम् ॥
क्वाथोऽथ कुस्तुंबुरुदेवदारुक्षुद्रौषधैः पाचनमत्र चारु ॥ २५ ॥

विश्वामृतेत्यादि ॥ विश्वा शुंठी अमृता गुडूची ग्रंथिकं पिप्पलीमूलं एभिः सिद्धं कथितं तोयं पिबतः पुरुषस्य अयं मरुज्ज्वरः कुतः स्यात न भवति । अतः परं द्वितीयक्वाथः । कुस्तुंबुरुर्धान्यं देवदारु प्रसिद्धं क्षुद्रा कंटकारीद्वयं शुंठीधान्यकं सुरदारु चेति क्षुद्रेतिबृहतीद्वयोपलक्षणम् औषधं शुंठी एभिः कृतः क्वाथः अत्र मरुज्ज्वरे चारु युक्तं पाचनं भवतीत्यर्थः ॥ २५ ॥

सोंठ गिलोय पीपरामूल इन औषधियोंसे सिद्धहुए काढेको पीनेवाले पुरुषका वातज्वर दूर होजाताहै । द्वितीयक्वाथ-धनियां देवदारु कटेरीकी जड इनका क्वाथ वातज्वरनाशक है ॥ २५ ॥

गुडान्वितो वर्यमृतव्रतत्योर्मरुज्ज्वरं हंति रसः प्रसह्य ॥
गोपांगनागोस्तनिकोपकुल्याकौंतीशताह्वा अपि पूर्वतुल्याः २६॥

गुडान्वित इति ॥ गुडेन युक्तः, शतावरी अमृतव्रतती गुडूची तस्याः रसः प्रसह्य बलान्मरुज्ज्वरं हंति गोपांगना सारिवा गोस्तनिका द्राक्षा उपकुल्या कणा कौंती रेणुका शताह्वा शतपुष्पा पूर्वतुल्या एतानि अपि पूर्वेण स्वरसेन तुल्या वातज्वरघ्ना इति यावत् । अत्र गुडान्विता इति वचनपरिणामेन संबंधनीयम् ॥ २६ ॥

गुडयुक्त शितावरी और गिलोयका क्वाथ हठसे वातज्वरका नाश करताहै । द्वितीय क्वाथ-सारिवा, मुनक्का, पीपर, मालेके बीज, सौंफ, इनका भी क्वाथ गुडयुक्त पूर्ववत् वातज्वरको नाश करनेवाला है ॥ २६ ॥

जलधरधन्वयवासकविश्वावत्सादनीकृतः क्वाथः ॥
वातज्वरघातकृतामतिप्रसिद्धः प्रयोगाणाम् ॥ २७ ॥

जलधरेति ॥ जलधरो मुस्ता धन्वयवासको दुस्पर्शः विश्वा शुंठी वत्सादनी गुडूची एषां कृतः क्वाथः वातज्वरघातकृतां प्रयोगाणां मध्ये अतिप्रसिद्धः अतिविख्यातः ॥ २७ ॥

मोथा-जवासेकी जड, सोंठ, गिलोय इनका क्वाथ वातज्वरको नाश करनेवाले सब प्रयोगोंमें अत्यन्त प्रसिद्ध है और यह अत्यन्त गुणकारी है ॥ २७ ॥

इति वातज्वरचिकित्सा ॥

पित्तज्वरके लक्षण ।

भ्रममदमुखतिक्तताप्रलापा वमिरदनच्छदनासिकास्यपाकाः ॥
मुखनयननखत्वगादिपीतं भवति मुहुर्मुहुरिच्छतीह शीतम् ॥२८॥

अतः परं पित्तज्वरचिकित्सा-आदौ ज्वरलिंगानि भ्रमेति ॥ भ्रमश्च-क्रारूढस्येव ज्ञानं पित्तदूषितनेत्रतया पीतः शंख इत्यादिविपर्ययज्ञानं वा, मदो धत्तूरादिभक्षणेनेव मत्तता, मुखतिक्तता वक्त्रे कटुता, प्रलापो मिथ्याभाषणं, वमिः छर्दिः, रदनच्छदौ ओष्ठौ, नासिका आस्यं मुखं तेषु पाकः पक्वता । मुखं नयने नेत्रे नखानि च त्वगादि च आदि-पदेन मलमूत्रादीनां ग्रहणम्, एषां पीतता भवति मुहुर्मुहुर्वारं वारं शीतं शैत्यं इच्छति ॥ २८ ॥

भ्रम, मद (धतूर आदिक भक्षणके नशाके सदृश) कडुआ मुँह, बडबडाना, वमन, होठ, नाक और मुँहका पकना, मुख, नेत्र, नख, त्वचा पीली हों; आदिशब्दसे विष्ठा मूत्रादिक पीले हों, वारम्वार शीतल पदार्थकी इच्छा करे ॥ २८ ॥

अतिसरणतृषौ विगंधि वक्त्रं
वपुरपि कोठशतोद्गमेन रक्तम् ॥
भृशतरमवसन्नमुष्णमंगं
ध्रुवमिति पित्तभवज्वरस्य लिंगम् ॥ २९ ॥

अतिसरणतृषाविति ॥ अतिसरणं च तृट् च अतिसरणतृषौ अतिसरणम् अतीसारः तृट् तृषा विगंधि विपरीतो गंधो यत्र तद्विगंधि वक्त्रं मुखं वपुरपि शरीरमपि, कोठशतोद्गमेन कोठाः पिटकविशेषास्तेषां शतं बहुसंख्यास्तैः रक्तं तेषाम् उद्गमेन रक्तं भृशतरम् । अत्यर्थम् अवसन्नम् स्वेदयुक्तम् उद्यमरहितम् उष्णम् अंगं ध्रुवं निश्चयेन भवति। पित्तभवज्वरस्य अमूनि चिह्नानि भवंति ॥ २९ ॥

अतीसार, प्यास, मुखमें दुर्गन्ध, शरीरभी अनेक फुंसियोंके निकलनेसे लाल हो, अत्यन्त पसीना आवे, शरीर गर्म रहे ये पित्तज्वरके लक्षण हैं ॥ २९ ॥

पित्तज्वरकी चिकित्सा ।

पित्तज्वरोपशमनाय पिबेत्पयोद-
दुःस्पर्शपर्पटकवारिकिराततिक्तान् ॥



संपाच्य मुस्तकटुकेंद्रयवान्नवान्वा
कट्वीसुरेशयववारिदसोमवल्कान् ॥ ३० ॥

पित्तज्वरेति ॥ पित्तज्वरोपशमनाय पयोदो मुस्ता दुःस्पर्शो धन्वयासः पर्पटः कवचो वारि बालकं किराततिक्तो भूनिंबः एषां क्वाथं पिबेत् । पुनः क्वाथांतरमाह-संपाच्येति । मुस्ता कटुकी । इंद्रयवः नवान् एतान्वा विपाच्य पिबेत् । पुनः प्राह । कट्वी कटुकी, सुरेशयव इंद्रयवः । वारिदो मुस्ता, सोमवल्कलः कटुफलः एतान्विपाच्य पिबेत् ॥ ३० ॥

पित्तज्वरके शमनके लिये मोथा, जवासेकी जड, पित्तपापडा, नेत्रबाला, चिरायता इनका काढा पीवे । द्वितीयक्वाथ-मोथा, कुटकी, इन्द्रजौ इनका क्वाथ पीवे । तृतीय क्वाथ-कुटकी, इन्द्रजौ, मोथा, कंजाकी मींग इनका क्वाथ पीवे ॥ ३० ॥

सुखोष्णसलिलेनाशु कटुकाशर्करान्विता ॥
पित्तज्वरोपशमनी श्रीपर्णी वा समाक्षिका ॥ ३१ ॥

प्रकारांतरमाह सुखेति ॥ सुखोष्णसलिलेन कवोष्णेन सह सुखोष्णं किंचिदुष्णम् एतेन क्वाथकल्पनानिरासः । कटुकी शर्करान्विता सती "चूर्णे गुडः समो देयः शर्करा द्विगुणा मता ।" इति नियमात्कटुकामानतो द्विः शर्करा योज्या, आशु शीघ्रं भक्षिता सती पित्तज्वरशमनी भवति । अपरमाह-श्रीपर्णी काश्मरी समाक्षिका मधुना सह पीता सती केवलं पित्तज्वरं हंति ॥ ३१ ॥

कुटकीका चूर्ण खांड मिलाकर थोडे गरम जलसे लेना चाहिये "चूर्णे गुडः समो देयः शर्करा द्विगुणा मता" इति परिभाषासे कुटकीके चूर्णसे दूनी खांड मिलाना चाहिये । गाम्भारीको सहतमें मिलाकर खाना चाहिये । इन दोनों चूर्णोंसे पित्तज्वर शान्त होताहै ॥ ३१ ॥

काश्मर्यचंदनोशीरमधूकान्सपरूषकान् ॥
विपाच्य शर्करोपेतं जलं पित्तज्वरं जयेत् ॥ ३२ ॥

काश्मर्येति ॥ काश्मरी चंदनं श्रीखंडम् उशीरं वीरणमूलं, मधूको मधुकवृक्षः, एतान् सपरूषकान् परूषकेन सहितान्, परुषकः फालिसा इति ख्यातः एतान् संक्वाथ्य शर्करोपेतं शर्करायुक्तं जलं क्वाथं पित्तज्वरनाशनम् ॥ ३२ ॥

गाम्भारी, लालचन्दन, खस, मुरेठी, फालसा इनका क्वाथ करके मिश्री मिलाकर पीनेसे पित्तज्वर शान्त होताहै ॥ ३२ ॥ इति पित्तज्वरचिकित्सा ।

कफज्वरके लक्षण ।

तंद्रोदर्दौमुखमधुरता स्तंभहृल्लेपलासाः
स्रोतोरोधः सदनमरुचिः पीनसश्वासकासाः ॥
छर्दिः शीतं भवति गुरुता रोमहर्षोऽग्निसादो
वेगाल्पत्वं किल कफजनेर्लिङ्गमेतज्ज्वरस्य ॥ ३३ ॥

अथ कफज्वराधिकारमाह–तंद्रेति ॥ तंद्रा अर्द्धोन्मीलितनेत्रत्वम् । उदर्दः "शीतपानीयसंस्पर्शाच्छीतकाले विशेषतः ॥ सरागकंडूर्यः शोफः स उदर्दः कफोद्भवः ॥" इति । मुखमधुरता स्तंभो दंडवन्नम्रता हृदयस्य लेपोल्लासश्च । तेन हृल्लेपो हृदयस्य श्लेष्मणा लिप्तत्वमिव हृल्लासो हृदयादीषल्लवणांबुनिर्गमः । स्रोतसां नासादिविवराणां रोधः कफपूर्णत्वात, सदनम् अंगसादः अरुचिरन्नाभिलाषः, पीनसः नासास्रावः, श्वासः श्वसनं, कासः कसनं, छर्दिर्वमनं शीतं भवति–गुरुता आर्द्रचर्मावनद्धमिव गात्रं मन्यते । रोमहर्षो रोमांचः, अग्निसादोऽग्निमान्द्यं, वेगाल्पत्वं ज्वरस्य वृद्धेरल्पत्वं किल कफजनेर्ज्वरस्य एतानि लिंगानि भवंति ॥ ३३ ॥

तन्द्रा ( आधा नेत्र मींचना ) उदर्द ( शीतपानीयसंस्पर्शात् शीतकाले विशेषतः ॥ सरागकण्डूर्यः शोफः स उदर्दः कफोद्भवः ) मुखमें मीठापन, शरीरका जकडना, हृदय कफसे लिपा–हुआ, हृल्लास ( हृदयसे नुनखरा थोडासा पानी निकलना अर्थात् उबकाई आना ) नासिका कर्ण आदि इन्द्रियोंके छिद्र रुकना, पीडा, अरुचि, जुकाम, श्वास, खाँसी, वमन, ठंढ लगना, शरीरका भारी होना, रोमाञ्च, अग्निमन्द, ज्वरका वेग थोडा ये लक्षण कफज्वरके हैं ॥ ३३ ॥

श्लेष्मज्वरकी चिकित्सा ।

मूलानि मातुलुंग्या दीप्यकशुंठीकणाश्च निःक्वथिताः ॥
पट्वयावशूकसहिताः कफज्वरं पाचयत्याशु ॥ ३४ ॥

चिकित्सामाह–मूलानीत्यादि॥ मातुलुंग्या मूलानि बीजपूरकमूलम् । दीप्यकः अजमोदा, केचित्–अजमोदास्थाने यवानिकां निःक्षिपंति पठंति च–" अंतःप्रमार्जनी ज्ञेया अजमोदा यवानिका " इति । शुंठी विश्वा, कणा पिप्पली, निःक्वथिता एताः पटुः सैंधवं यावशूको यवक्षारस्ताभ्यां सहिताः कफज्वरं आशु शीघ्रं पाचयंति नाशयंति ॥ ३४ ॥



बिजोरेकी जड, अजमोद, कोई दीप्यक शब्दसे अजवायन लेतेहैं । सोंठ पीपर इनके क्वाथमें सेंधानोन और जवाखार मिलाकर पीनेसे कफज्वरका पाचन होताहै ॥ ३४ ॥

कृष्णाकौशिकवृक्षबीजकटुकाकीटद्विषच्चित्रक-
द्रेष्काग्रंथिकविश्वभेषजवचामूर्वाविषाजीरकैः ॥
एलारामठरेणुकोषणवृकीचव्येभकृष्णायुतै-
र्भार्गीदीप्यकसर्षपैश्च कफजे कुर्याज्ज्वरे पाचनम् ॥ ३५ ॥

कृष्णेति ॥ कृष्णा पिप्पली, कौशिकवृक्षबीज इंद्रयवः, कटुका कट्वी कीटद्विषत वायविडंगानि, चित्रकः प्रसिद्धः, द्रेष्का महानिंबः, ग्रंथिकं पिप्पलीमूलं, विश्वभेषजं शुंठी, वचा प्रसिद्धा, मूर्वा मोरहडी, अतिविषा अतीसः, जीरकं जरणम्, एला सूक्ष्मैला, रामठं हिंगु, रेणुकं निर्गुडीबीजं, ऊषणं मरिचं, वृकी पाठा, चव्यकं चव्यः, इभकृष्णा गजपिप्पली, भार्गी भारंगी, दीप्यकम्–अजमोदा, सर्षप एतैः क्वाथः कफज्वरे पाचनं कुर्यात ॥ ३५ ॥

छोटी पीपर, इन्द्रजौ, कुटकी,–वायविडंग, चित्रक, नीमकी छाल, पीपरामूल, सोंठ, वच, मरोरफली, अतीस, जीरा, छोटी इलायची, हींग, संभालूके बीज, कालीमिरच, पाठा, चव्य, बडी पीपर, भारंगी, अजमोद, सरसों इन औषधियोंका क्वाथ कफज्वरको नाश करताहै ॥ ३५ ॥

मुस्तमहौषधमरुभवमृगारिपुमुखनिर्मितः क्वाथः ॥
जयति कफज्वरमतिबलमपि शुंठीरोहिषाभ्यां वा ॥ ३६ ॥

मुस्तेति ॥ मुस्तं महौषधं शुंठी, मरुभवो दुरालभा, मृगरिपुमुखः वासकः एतेषां क्वाथः अतिबलं कफज्वरं जयति । यद्वा शुंठी रोहिषः कट्तृणं ताभ्यां निर्मितः क्वाथः अतिबलं कफज्वरं जयति ॥ ३६ ॥

मोथा, सोंठ, जवासेकी जड, बांसेके पत्ते इनका क्वाथ अत्यन्त बलवान् कफज्वरको नाश करताहै तथा सोंठ, रोहिषतृण ( रोसा ) इनका क्वाथ भी बलवान् कफज्वरको नाश करता है ॥ ३६ ॥

त्रिकटुकुंजरकेसररात्रयः सकटुकेन्द्रयवाः सुखवारिणा ॥
प्रशमयंति कफज्वरमुद्धुरं रविरुचस्तिमिरप्रकरं यथा ३७॥

क्वाथांतरमाह–त्रिकटिति ॥ त्रिकटु व्योषं कुंजरकेसरं नागकेसरं, रात्रयो हरिद्राः, सकटुकेंद्रयवाः कटुका कट्वी इंद्रयवस्ताभ्यां सहिताः

केप्येतच्चूर्णं वदंति सुखवारिणा कवोष्णेन पीताः, एतेन चूर्णकल्पनेयमिति सूचितम्। उद्धुरं उत्क्रांता धूर्मर्यादा येन तादृशं कफज्वरं प्रशमयंति नाशयंति । दृष्टांतमाह-रविरुचः सूर्यरश्मयः तिमिरप्रकरं गाढं तमः प्रशमयन्ति नाशयन्ति तद्वत् ॥ ३७ ॥

सोंठ, मिरच, पीपर, नागकेशर, हलदी, कुटकी, इन्द्रजौ इनका चूर्ण गरम जलके साथ सेवन करनेसे जैसे सूर्यकी किरणोंसे अन्धकार नष्ट होताहै उसी तरहसे बलवान् कफज्वरको यह चूर्ण नाश करताहै ॥ ३७ ॥

इति कफज्वरचिकित्सा ॥

---

वातपित्तज्वरके लक्षण ।

छर्दिर्मूर्च्छादाहमोहाः सतर्षा
जृंभा कंपोऽनिद्रता रोमहर्षाः ॥
मिथ्यावाक्त्वं मूर्द्धरुक्पर्व्वभेदः
शोषो लिंगं वातपित्तज्वरेऽदः ॥ ३८ ॥

अतः परं द्वंद्वज्वरदोषमाह-छर्दिरिति ॥ वातपित्तज्वरे अदः लिंगम्-एतच्चिह्नमित्यर्थः। छर्दिः वमिः, मूर्छा संज्ञानाशः, दाहः सर्वांगीणः, मोहो वैचित्यं, तर्षा पिपासा, जृंभा जृंभणं, कंपो वेपथुः अनिद्रता निद्रानाशः, रोमहर्षः रोमोद्गमः, मिथ्यावाक्त्वं यथेष्टाभाषणं, मूर्द्धरुक् शिरःशूलं, पर्वभेदः संधीनां भेदनवत्पीडा, शोषः कंठौष्ठादेः ॥ ३८ ॥

वमन, मूर्च्छा, जलन, विकलता, प्यास, जंभाई, काँपना, नींद, रोमहर्ष, बडबडाना, शिरमें दर्द, सन्धिस्थानोंमें फूटन, कंठ होठ आदिकोंका सूखना यह वातपित्तज्वरके लक्षण हैं ॥ ३८ ॥

वत्सादनीवारिदवर्मवासा
विश्वं मरुत्पित्तभवज्वरार्तिम् ॥
निहंति वा नागरनार्यतिक्ताऽ-
नंतामृतानीरदमंबुपक्वम् ॥ ३९ ॥

वत्सादनीति ॥ वत्सादनी गुडूची, वारिदो मुस्तं, वर्मः पर्पटः, वासा पंचाननः, विश्वं शुण्ठी, मरुद्वायुः पित्तं मायुस्ताभ्यां भवा उत्पन्ना या ज्वरार्तिस्तां नाशयति । यद्वा । द्वितीयः क्वाथः-नागरं शुंठी, नार्यो किराततिक्तः, अनंता यासः, अमृता गुडूची, नीरदो मुस्तम्, इदं सर्वम् अंबुनि पक्वं क्वथितं वातपित्तज्वरं शमयति ॥ ३९ ॥

गिलोय, मोथा, पित्तपापडा, वांसेके पत्ते, सोंठ इनका क्वाथ वातज्वरको नाश करताहै । अथवा सोंठ, चिरायता, जवासा, गिलोय, मोथा इन सबका क्वाथ वातज्वरका नाश करता है ॥ ३९ ॥



राजद्रुमफलं रास्ना मृगेंद्रास्यफलत्रयम् ॥
जयत्येव ज्वराज्जंतोर्वातपित्तोद्भवाद्भयम् ॥ ४० ॥

राजद्रुमफलमिति ॥ राजद्रुम आरग्वधस्तस्य फलं फलेति तदंतर्वर्तिमज्जोपलक्षणं 'ततो मज्जानमुद्धृत्य' इति वाग्भटोक्तेः, संप्रदायाच्च । रास्ना प्रसिद्धा, मृगेंद्रास्यो वृषः, फलत्रयं हरीतक्यामलकबिभीतकानि, एतत्षट्कम्-अंबुपक्वमित्यावर्त्तते, जंतोः प्राणिनः वातपित्तज्वराद्भयं निहंति । भीत्रार्थानामित्यपादानत्वात्पंचमी । अत्र फलत्रयस्यैकत्वाभावात्प्रत्येकं भागकल्पना न समुदायेन, फलत्रयत्रिकटूवादिसंज्ञानां लाघवार्थत्वात्। कथं तर्हि योगराजकैशोरकादिगुग्गुलुत्वादिषु समुदायेन, भागकल्पनेति चेदुच्यते । तत्र तत्तदौषधेभ्यः पृथक्कृत्य भागविभागमेव प्रयोजकं यथा योगराजे पिप्पल्यादीनि पठित्वा "भागैः संचूर्णितैरेषां त्रिफला द्विगुणा भवेत्॥" इति। तथा कैशोरके वनमहिषलोचनोदरसन्निभवर्णस्य गुग्गुलोः प्रस्थं प्रक्षिप्य तोयराशौ त्रिफला यथोक्तपरिमाणेति। एवं चैतदेवात्र विनिगमकमित्यत्र प्रत्येकमेव यथा "फलत्रयं दारु निशां विशालां मुस्तां च निःक्वाथनिशांशकल्कम्" इत्यादौ "तिलाज्यत्रिफलाक्षौद्रव्योषभल्लातशर्कराः ॥ एष सप्त समावाप्य कुष्ठहा कामचारिणा" इत्यत्र तत्सप्तसमत्वान्यथानुपपत्तिरेव समुदायभागकल्पनायाः मानम्। एवं त्रिकटुपंचमूलादिष्वपि ज्ञेयम्। अनुष्टुप्छंदः ॥ ४० ॥

अमलतासका गूदा, रासना, वासा, त्रिफला इनका क्वाथ वातपित्तज्वरसे उत्पन्नहुए भयको शीघ्र दूर करताहै ॥ ४० ॥

किरातधात्रीफलहारहूरामृताव्रतत्यः क्षयमेव दूरात् ॥
नयंति पित्तानिलजं जवेन ज्वरं विमिश्रा जरठा गुडेन४१

किरातेति ॥ किरातो रामसेनः, धात्रीफलं आमलकं, हारहूरा द्राक्षा, अमृतव्रतती गुडूची, एताश्चौषधयः जवेन वेगेन पित्तानि-

लजं ज्वरं विकारं दूरात् क्षयमेव नयंति । कीदृश्य ओषध्यो जरठा गुडेन जीर्णेन गुडेन विमिश्रा युक्ताः क्वाथोऽयमुक्तः ॥ ४१ ॥

चिरायता, आमला, मुनक्का, गिलोय इनके काथमें पुराना गुड मिलाकर सेवन करनेसे वातपित्तसे उत्पन्नहुआ ज्वर शीघ्र ही नष्ट होजाताहै ॥ ४१ ॥

जलधरकृतमालोशीरदेवद्रुदोषा
कुलकमधुकनिंबक्काथपानं ज्वरस्य ॥
जयति मदमुदग्रे वातपितोद्भवस्य
द्रुतमपि मददाहग्लानितृष्णायुतस्य ॥ ४२ ॥

जलधरेति ॥ जलधरो मुस्ता, कृतमालो आरग्वधः, उशीरं वीरणमूलं, देवदारुः दोषा निशा हरिद्रेति यावत् । कुलकः पटोलः मधुको यष्टीमधुः निंबो नेता एषां क्वाथपानं वातपित्तोद्भवस्य ज्वरस्य उदग्रं उत्कटं मदं वेगविषयं द्रुतमपि शीघ्रमपि जयति । किंभूतस्य मदो दाहः दाहेऽत्यंततापः, ग्लानिः खेदः तृष्णा तृषा तया युक्तस्य ॥ ४२ ॥

मोथा, अमलतास, खस, देवदारु, हल्दी, परवरके पत्ते, मुरेठी, नीमकी छाल इन औषधियोंका काथ मद, दाह, ग्लानि, प्यासयुक्त वातपित्तसे उत्पन्नहुए ज्वरके प्रचण्डगर्वका खण्डन करनेवाला है ॥ ४२ ॥

निदिग्धिकाकुंडलिकाबलाभि-
स्त्रायंतिकावासकसारिवाभिः ॥
मसूरमिश्राभिररंशृताभि-
र्ज्वरं समीरानलजं हरंति ॥ ४३ ॥

निदिग्धिकेति ॥ निदिग्धिका व्याघ्री, कुंडलिका गुडूची, बलावाट्यालकः, त्रायंतिका त्रायमाणा, वासको पंचास्या, सारिवा गोपी मसूरमिश्राभिः मसूरैः धान्यैः मिश्राभिः भागे नियुक्ताभिः अरं सृताभिः अत्यर्थं क्वथिताभिः । समीरो वायुः अनलोऽत्र पित्तं तस्याग्निमयत्वात्, ताभ्यां जातो ज्वरः तं निहन्युः नाशयेयुः ॥ ४३ ॥

कटेरीकी जड, गिलोय, खरेटी, वानसा, अडूसा, सारिवा, मसूर ( धान्य ) मिश्रित इनका काथ वातपित्तसे उत्पन्नहुए ज्वरको नाश करताहै ॥ ४३ ॥

इति वातपित्तज्वरकी चिकित्सा ।

---



वातकफज्वरके लक्षण ।

पर्वव्यथापीनसकासशूलशिरोरुजः श्वासतमोविबंधाः ॥
उत्क्लेशतंद्रारुचिशीतकंपाः सगौरवा वातकफज्वरेषु ॥ ४४ ॥

अथ वातकफज्वरचिह्नमाह-पर्वेति ॥ पर्वणां संधीनां व्यथा पीडा, पीनसः नासाविकारः, कासः कसनं, शूलं पार्श्वादिषु महती रुक्, शिरोरुजः शिरोव्यथा, श्वासः श्वसनं, तमः अंधकारे प्रविष्टस्येव ज्ञानं, विबंधो मूत्रपुरीषयोरोधः, उत्क्लेशः-"यस्य चान्नं न निर्गच्छेत्प्रसेकष्ठीवनेरितम् । हृदयं पीडयते यस्य तस्योत्क्लेशं विनिर्दिशेत् ॥" तंद्रा निद्रा, अरुचिः अरोचनं, शीतं शीताविर्भावः, कंपो वेपथुः, एते सर्वे सगौरवाः गौरवगात्रतया सह वर्त्तमानाः । एतानि चिह्नानि वातकफज्वरस्य भवंति ॥ ४४ ॥

सन्धिस्थानमें पीडा, जुकाम, खाँसी, पसवाडे आदिकोंमें दर्द, शिरमें दर्द, श्वास, अन्धकार मूत्र और विष्टाका रुकना, उबकाई आना, तन्द्रा, अरुचि, शीत, काँपना, शरीरका भारी होना; ये लक्षण वातकफज्वरमें होतेहैं ॥ ४४ ॥

पिबन्मागधीमूलशम्पाकमुस्ताभयामत्स्यपित्ताकषायं मनुष्यः ॥
बलासानिलारब्धमामानुबन्धंज्वरं पाचयत्यग्निमान्द्यं न विंदेत् ४५

चिकित्सामाह-पिबन्निति ॥ मागधीमूलं पिप्पलीमूलं, शम्पाको आरग्वधः, मुस्ता घनं, अभया हरीतकी, मत्स्यपित्ता कटुकी, एतेषामौषधानां कषायं क्वाथं मनुष्यः पुमान्पिबन्सन्, बलासः श्लेष्मा, अनिलो वायुः, ताभ्यामारब्धं कृतम् आमेनानुबन्धयुक्तं ज्वरं पाचयति । अग्निमान्द्यं न विंदेत, अग्निप्रबोधो भवति ॥ ४५ ॥

पीपरामूल, अमलतास, मोथा, हरड, कुटकी इन औषधियोंके काथको पीनेवाला मनुष्य वातकफसे उत्पन्नहुए ज्वरको पचाताहै और अग्निमान्द्यको दूर करताहै ॥ ४५ ॥

विपाच्य धाराधरधन्वयासधारारजोनागरमच्छवाराः ॥
पीतं ज्वरारोचकतर्षशूलवमीसमीरार्तिहरं वदंति ॥ ४६ ॥

विपाच्येति ॥ धाराधरो मुस्तं, धन्वयासः दुरालभा, धारा गुडूची, रजः कवचं, नागरं शुंठी, एतदौषधम् अच्छवारा निर्मलोदकेन विपाच्य पीतं सत् ज्वरस्य अरोचकश्च तर्षः तृषा च शूलं च वमिश्च समी-

रार्त्तिश्चैतान् हंति । अत्र ज्वरः प्रकृतत्वाद्वातकफजः समीरार्त्तिर्वातपीडा ॥ ४६ ॥

मोथा, जवासा, गिलोय, पित्तपापडा, सोंठ इनका स्वच्छ जलसे औटाया हुआ काढा पीनेसे ज्वर, अरुचि, प्यास, शूल, वमन, वायु इनकी पीडाको दूर करताहै ॥ ४६ ॥

पुष्कराह्वयपीयूषवल्लीव्याघ्र्यः सनागराः ॥
वातश्लेष्मज्वरश्वासशूलान्हन्युः सुदारुणान् ॥ ४७ ॥

पुष्कराह्वयेति ॥ पुष्कराह्वयं पुष्करमूलं, पीयूषवल्ली गुडूची, व्याघ्री क्षुद्रा, सनागराः शुंठीसहिताः वातश्लेष्मज्वरजनितश्वासशूलान् सुदारुणान् हन्युः नाशयेयुः ॥ ४७ ॥

पहुकरमूल, गिलोय, कटेरीकी जड, सोंठ इनका काढा दारुण वातपित्तज्वर श्वास और शूलको नाश करताहै ॥ ४७ ॥

मुस्तं सकुस्तुंबरुदारुभार्गीविश्वाभयाकट्फलकट्तृणोग्रम् ॥
सपर्प्पटं चेति दशांगमुक्तं कषायमेतन्मधुना तु युक्तम् ॥ ४८ ॥
हिनस्ति हिक्कारुचिकासतंद्रामरुत्कफोत्थं ज्वरमुद्धतं द्राक् ॥
गलग्रहं श्वासमुदग्रशूलं हृत्पार्श्वकोष्ठांतरबद्धमूलम् ॥ ४९ ॥

मुस्तेति ॥ मुस्तं घनं, कुस्तुंबुरु धान्यं, दारु देवदारु, भार्गी प्रसिद्धा, विश्वा शुंठी, अभया हरीतकी, कट्फलं कायफलं, कट्तृणं रोहिषम्, उग्रा वचा तेन सह वर्तमानं पर्पटं कवचं तेन सह वर्तमानं मुस्तं घनम्, एतत्कषायं दशांगमुक्तं कथितम् । तन्मधुना क्षौद्रेण सहितं पीतं सत्॥४८॥ हिनस्तीति ॥ हिक्कादीन् नाशयति । हिक्का हिक्कनम्, अरुचिः अरोचनं, कासः कसनं, तंद्रा अकालनिद्रा, उद्धतं बलवत्तरं, मरुत्कफोत्थज्वरं द्राक् तत्क्षणं गलग्रहं गलग्रहणवत्पीडावरोधश्च श्वासं हृदयपार्श्वकोष्ठांतरबद्धमूलमुत्पत्तिस्थानं यस्य तद्-उदग्रशूलं उत्कटशूलम् ॥ ४९ ॥

मोथा, धनियां, देवदारु, भारंगी, सोंठ, हरड, कायफल, रोसा, वच, पित्तपापडा इनका क्वाथ सहतके साथ सेवन कियाहुआ हिचकी, अरुचि, खांसी, तन्द्रा, प्रचण्ड वातकफज्वर, गलेके रुकजानेको तथा श्वास, हृदय, पसवाडा, और कोष्ठस्थानमें उत्पन्नहुए महान् शूलको भी नाश करता है ॥ ४८ ॥ ४९ ॥

इति वातश्लेष्मज्वरचिकित्सा ।

---



श्लेष्मपित्तज्वरके लक्षण ।

स्तंभसादौ तृषा लिप्ततिक्तास्यता
शीतदाहारुचिस्वेदमोहान्विताः ॥
कासहृल्लासतंद्रामदाः सभ्रमाः
श्लेष्मपित्तज्वरे साग्निसादश्रमाः ॥ ५० ॥

अतः परं श्लेष्मपित्तज्वरं विवृणोति स्तंभसादाविति ॥ स्तंभः दंडवत् सादो अंगावसादः, तृषा पिपासा तृट्, कफेनालिप्तं पित्तेन तिक्तमास्यं तस्य भावः लिप्ततिक्तास्यता, शीतं, दाहोऽरुचिः, स्वेदबाहुल्यं मोहः वैचित्यं, तैरन्विता युक्ताः । कासः हृल्लास उत्क्लेदः तंद्रा गहनं मदः भंगादि भक्षणेनेव मत्तता भ्रमश्चक्रारूढस्येव तेन सहिताः, अग्निसादोऽग्निनाशः, श्रमः स्वेदः, तेन सहिताः, एतच्चिह्नं श्लेष्मपित्तज्वरे भवति ॥ ५० ॥

शरीरका जकडना तथा शरीरका टूटना, प्यास, कफसे लिपाहुआ और पित्तसे कडुआ मुंह, शीत लगना, दाह, अरुचि, पसीना, विह्वलता, खाँसी उबकाई, तन्द्रा, मद, ( नशासा मालूम हो ) भ्रम, अग्निमन्द, थकावट ये लक्षण कफपित्तज्वरमें होतेहैं ॥ ५० ॥

श्लेष्मपित्तज्वरकी चिकित्सा ।

त्रायंतीकटुके तुल्ये यष्ट्याह्वमुभयोः समम् ॥
पिबेत्पर्युषितं क्षौद्रयुतं पित्तबलासजित् ॥ ५१ ॥

त्रायंतीति ॥ त्रायंती त्रायमाणा कटुका उभे तुल्ये तयोः समं यष्ट्याह्वं यष्टीमधुक्षौद्रयुक्तं मधुना युक्तं पर्युषितं रात्रौ वारिणा प्लावितं सत् पिबेत् पित्तश्लेष्मजिद्भवति ॥ ५१ ॥

बनप्सा और कुटकी समान भाग और दोनोंके बराबर मुरेठी इन तीनोंको पानीमें रात्रिको भिगोदेवे, प्रातः छानकर शहत मिलाकर पीनेसे श्लेष्मपित्तज्वर नष्ट होजाताहै ॥ ५१ ॥

पिचुमंदशोणचंदनपद्मकपीयूषवल्लरीधान्यम् ॥
कफपित्तजनितमुल्बणदाहतृषावमिकरं ज्वरं जयति॥५२॥

पिचुमंदेति ॥ पिचुमंदो निंबः, शोणचंदनं रक्तचंदनं, पद्मकं पद्माक्षं, पीयूषवल्लरी गुडूची, धान्यं कुस्तुंबुरुः, अयं क्वाथः कफपित्तजनितं कफ-

पित्तोद्भवम् उल्बणम् उत्कटदाहः तृषा वमिः वमनं एतान्करोतीति तत् तं ज्वरं तापं जयति नाशयति ॥ ५२ ॥

नीमकी छाल, लाल चन्दन, पद्माख, गिलोय, धनियां इनका काथ कफपित्तसे उत्पन्न बढी हुई दाह, प्यास, वमन ज्वरको नाश करताहै ॥ ५२ ॥

**वृषावत्सकारिष्टवत्सादिनीभिः शृतं वारि सश्लेष्मपित्तापहारि ॥**
**युतं सारघेणाथ यष्टीपटोलीबलासिंहतुंडाक्षपथ्याशिवाभिः॥५३॥**

वृषेति ॥ वृषः आटरूषकः वत्सकः कुटजस्तस्यात्रबीजानि, अरिष्टः पिचुमंदः, वत्सादनी गडूची, ताभिः शृतं वारि कथितमुदकं श्लेष्म-पित्तज्वरं नाशयति । अपरः क्वाथः । यष्टी यष्टीमधु, पटोली कुलकः, बला वाट्यालकः, सिंहतुंडः वृषः, अक्षः बिभीतकः, पथ्या हरीतकी, शिवा आमलकी, एताभिः शृतं वारि सारघेण मधुना युतं श्लेष्मपित्तज्वरं नाशयति ॥ ५३ ॥

अडूसा, इन्द्रजौ, नीमकी छाल, गिलोय इनका काथ पित्तश्लेष्मज्वरको नाश करताहै । अथवा मुरेठी, परवलके पत्ते, खरेटी, अडूसा, बहेडा, हरड, आमला इनका काथ सहतके साथ पियाहुआ श्लेष्मपित्तज्वरको नाश करताहै ॥ ९३ ॥

**सिंहास्यशक्रयवपद्मकपर्पटाह्व-**
**कट्वीकिरातपिचुमंदपटोलयुक्ताः ॥**
**आरग्वधांबुधरधन्वयवासधारा-**
**त्रायंतिकाः प्रबलपित्तकफापहाः स्युः ॥ ५४ ॥**

सिंहास्येति ॥ सिंहास्यो वृषः, शक्रयव इंद्रयवः, पद्मकः पद्मकाष्ठं, पर्पटाह्वः कवचः, कट्वी कटुकी, किरातो भूनिंबः, पिचुमंदो निंबः, पटोलः कुलकः एतैर्युक्तम् । आरग्वधो राजवृक्षकः, अंबुधरो मुस्तं, धन्वयासा दुरालभा, धारा गुडूची, त्रायंतिका त्रायमाणा, एता ओषधयः प्रबल-पित्तकफापहाः स्युः प्रबलपित्तं कफं नाशयंति ॥ ५४ ॥

अडूसा, इन्द्रजौ, पद्माख, पित्तपापडा, कुटकी, चिरायता, नीमकी छाल, परवलका पत्ता, अमलतासका गूदा, मोथ, जवासा, गिलोय, धनप्सा इनका काथ पित्तकफज्वरको भी नाश करताहै ॥ ९४ ॥

इति श्लेष्मपित्तज्वरचिकित्सा ।

---



सन्निपातज्वरके लक्षण ।

**निद्रानाशमदभ्रमश्रमतमस्तंद्राप्रलापारति**
**श्वासस्तंभतृषाग्निसादहृदयाक्षोदस्वरोजःक्षयाः ॥**
**स्वेदः स्यादतिनैव वातिकलुषे रक्तेक्षणी साश्रुणी**
**भुग्ने संहतयक्ष्मणी च परुषा दग्धेव जिह्वा गुरुः ॥ ५५ ॥**

द्वंद्वमुक्त्वा सन्निपातज्वरमाह-निद्रानाशेति ॥ निद्रानाशादयो भवंति । निद्रानाशः स्वभाववैपरीत्यं तेन महानिद्रा दिवा प्रलापोऽसंबद्धभाषणम्, अरतिः असंतोषः, श्वासः श्वसनं, स्तंभो दंडवदनम्रता, तृषा तृट्, अग्निसादोऽग्निमान्द्यं, हृदयस्य क्षोदः कुट्टनवत्पीडा, स्वरक्षयः स्वरभंगः, ओजसः क्षयः सर्वांगव्यापि हृदयस्थतेजोविशेषस्य क्षयः, अतिकलुषे अतिरक्तेऽश्रुभिः सह वर्त्तमाने भुग्ने वक्रे संहते मिलिते पक्ष्मणी ययोस्ते अक्षणी भवतः । परुषा खरा जिह्वा दग्धा इव गुरुः भाषण-रहिता भवति ॥ ५५ ॥

नींद न आना, मद ( नशा ) भ्रम ( चक्कर ) थकावट आखोंसे अंधेरा मालूम होवे, तन्द्रा, बडबडाना, पीडा, श्वास, शरीरका जकडना, प्यास, मन्दाग्नि, हृदयमें कूटनेके समान पीडा, स्वरभंग, ओजका क्षय, पसीना कभी अधिक आवे कभी बिलकुल न आवे, कीचड तथा लाल आसूंयुक्त दोनों नेत्र तथा टेढे पलक, आपसमें मिलेहुए नेत्र हों, जीभ खरखरी और भारी हो ॥ ९९ ॥

**कर्णौ सस्वनवेदनावतिशिरःपर्वास्थिपार्श्वव्यथा**
**कंठः शूकशिखाशतैरिव वृतः कोठः शिरोलोठनम् ॥**
**निष्ठीवः कफरक्तयोरपि महान् दाहस्तथाऽहर्निशं**
**मोहो नर्त्तनगीतहास्यविकृतिर्दोषप्रपाकश्चिरात् ॥ ५६ ॥**

कर्णेति ॥ कर्णौ सस्वनवेदनौ शब्दसहितौ सवेदनौ पीडासहितौ भवतः । शिरसि पर्वसु, अस्थिषु पार्श्वयोः अति अत्यंतं पीडा भवति । कंठो गलः शूकशिखा शालिधान्यशिखानां शतैः वृत्त इव कोठो भवति । "वरटीदष्टसंस्थानं कोठ इत्यभिधीयते" शिरसो लोठनं शिरसो दोलनं कफपित्तयोः निष्ठीवः, महान् दाहः तथा अहर्निशं मोहो भवति । नर्त्तनादीनां विकृतिश्चेष्टा दोषाणां समानां मलानां प्रपाकः पचनं चिराद्भवति ॥ ५६ ॥

कानोंमें झनझनाहट और पीडा, शिर, सन्धिस्थान, हड्डी, पसवाडा इनमें अत्यन्त पीडा कण्ठशूक ( गेहूं जौके ऊपरके तीकुरके सदृश ) सैकडों तीकुरोंसे व्याप्त, कोठ ( ददोरा ) ' वरटीदष्ट-संकाशः कण्डूयमानो लोहितोऽस्रकफपित्तात्क्षणिकोत्पादविनाशः कोठ इति निगद्यते तज्ज्ञैः ) शिरको इधर उधर फैंकना, कफ और रक्तको थूकना, महान् दाह तथा दिनरात बेहोशी रहना, नांचना, गाना, हँसना इत्यादिकी विकृति करना, चिरकालमें दोषोंका पकना ॥ ९६ ॥

संसंगोतिविशोऽल्पशोथ बहुशो नित्यं प्रवृत्तिं ज्वरं
कष्टं केचन सान्निपातिकमिमं प्राहुश्च साध्येतरम् ॥
निद्रावेगविमोहितं च भिषजोभिन्यासमेनं तथाऽ-
तिक्षीणं च हतौजसं हतवपुश्चेष्टं च संन्यासकम् ॥५७॥

संसंगेति ॥ अतिसंसंग अत्यंतसंरोधः कस्य विशो मलस्य, अथवा विशोऽल्पशः प्रवृत्तिरतिसरणम्, अथवा बहुशोऽथवा नित्यं मुहुर्मुहुरिति यावत् । केचन आचार्याः इमं सान्निपातिकं ज्वरं कष्टं साध्येतरं प्राहुः बहुलक्षणैः साध्येतरं प्राहुः । बहुलक्षणैः साध्येतरम् अल्पैः कष्टमिति युक्तिमानाच्चानादरणीयम् । अवस्थाविशेषात्संज्ञाभेदमाह निद्रावेगेन विहितो विसंज्ञोऽर्थाद्रोगी विमोहनं यस्मात्तादृशम् अभिन्यासं प्राहुः । भिषजो वैद्या अतिक्षीणो यस्मात्तादृशं हतौजसं च हतं वपुश्चेष्टे येन तादृशं संन्यासकं च प्राहुः । अभिव्याप्य नितराम् आसयति उपवेशयति शयन इत्यभिन्यासः । हतं ओजो येनेति हतौजाः । संन्यासयति सर्वान्नित्यं जयति संन्यासः ॥ ५७ ॥

और विष्टाका अत्यन्त रुकना अथवा थोडा थोडा निकलना अथवा विष्टाका बहुत निकलना, सम्पूर्ण समयमें ज्वर रहना इस सन्निपातको कोई अल्प लक्षण होनेसे कृच्छ्रसाध्य कहतेहैं और कोई कोई बहुत लक्षण होनेसे असाध्य कहतेहैं । और निद्राके वेगसे ज्ञानरहित पुरुषको अभिन्यास ज्वर कहतेहैं । अतिक्षीण पुरुष तथा नष्ट होगयाहै ओज जिससे और चेष्टारहित व्याससे नष्ट होगयाहै शरीर जिसका ऐसे पुरुषको संन्यास ज्वर जानना ॥ ९७ ॥

धार्मिकं धनिनं धीरमनुकूलग्रहं नरम् ॥
साधयेदल्पलिंगेन संनिपातेन सेवितम् ॥ ५८ ॥

धार्मिकमिति ॥ धार्मिकं धर्मिष्ठं, धनिनं धनयुक्तम्, आढ्यो रोगीति वाग्भटे । धीरं धैर्ययुक्तम्, अनुकूलग्रहम् । अल्पलिंगेन संनिपातसंपूर्णचिह्नरहितेन संनिपातेन सेवितं नरं साधयेत् चिकित्सेत, विशेषेण धर्माचरणमेव प्रतीकारः संनिपाते ॥ ५८ ॥



धर्मनिष्ठ धनवान् धैर्ययुक्त और शुभग्रहकी दशायुक्त सन्निपातके अल्प लक्षणोंसे सेवित पुरुषकी चिकित्सा करे ॥ ९८ ॥

विपक्वदोषस्य विलंघनाद्यैर्हन्युर्ज्वरान्क्वाथविधिप्रयुक्ताः ॥
विश्वामृतावारिदरामसेनाः श्येना इव क्षुद्रशकुंतसंघान् ५९॥

विपक्वदोषस्येति ॥ विशेषेण लंघनपदेन उष्णोदकगुरूष्णसिचयनिवातग्रहादिग्रहणम् । विपक्वदोषस्य पुंसः क्वाथविधिना प्रयुक्ताः विश्वामृताद्या ओषधयो ज्वरान्संनिपातज्वरान्हन्युर्नाशयेयुः। विश्वा शुंठी अमृता गुडूची वारिदो मुस्ता रामसेनः किरातः । अत्र दृष्टांतः–यथा श्येनाः क्षुद्रशकुंतसंघान पक्षिसमूहान् घ्नंति ॥ ५९ ॥

लंघनादिकोंसे दोष परिपक्व होगयेहैं जिस पुरुषके ऐसे पुरुषके सोंठ, गिलोय, मोथा, चिरायता इनका विधिसे सिद्ध कियाहुआ क्वाथ सन्निपातज्वरको नाश करताहै । जैसे बाज पक्षियोंके समूहको नाश करताहै उसीतरह दोषपरिपक्व पुरुषके सन्निपातको यह क्वाथ दूर करता है ॥ ९९ ॥

पथ्याकलिशिवाक्वाथः सर्पिषा संनिपातजित् ॥
पिप्पलीचूर्णसहितः पंचमूलद्वयस्य वा ॥ ६० ॥

पथ्येति ॥ पथ्या हरीतकी, कलिः विभीतकः, शिवा आमलकं त्रिफलेति फलत्रिकस्य क्वाथः सर्पिषा घृतेन सह सन्निपातजिद्भवति । वापरक्वाथः । पंचमूलीद्वयस्य दशमूलस्य क्वाथः पिप्पलीचूर्णसहितः संनिपातजिद्भवति । सर्पिरत्र गव्यं तच्च पुराणमेव दशवर्षस्थितं सर्पिरेते च कषाया भेषजयोग्यपर्यालोचनया । यथा दोषप्रयोज्ये यथा मध्यकफपित्तोल्बणे च विश्वादिः । वातपित्तोत्तरे पथ्यादि, वातश्लेष्मोत्तरे दशमूलमिति ॥ ६० ॥

हरड, बहेडा, आमला इनका क्वाथ घृतके साथ सेवन कियाहुआ सन्निपातज्वरको नष्ट करताहै । पिप्पली सहित दोनों पञ्चमूलियोंका क्वाथ भी सन्निपातको दूर करताहै ॥ ६० ॥

क्षुद्राहरिद्रासुरदारुकट्वीपटोलनिंबत्रिफलापयोदाः ॥
नयंति पीताः प्रशमं पिपासाप्रसेककासारुचिसंनिपातान् ६१

क्षुद्रेति ॥ क्षुद्रा व्याघ्री, हरिद्रा निशा, सुरदारु देवकाष्ठं, कट्वी कटुका, पटोलः कुलकः, निंबो नेता, त्रिफला फलत्रिका, पयोदो मुस्ता, पीताः संतः पिपासादीन्प्रशमयंति । पिपासा तृष्णा, प्रसेको लालास्रावः, कासः

...नम्, अरुचिः संनिपातः एतान् काथोऽयं प्रशमयति । पिपासादिग्रहणं पित्तोत्तरस्य प्रयोगार्थम् ॥ ६१ ॥

कँटेरी, हल्दी, देवदारु, कुटकी, परंवलके पत्ते, नींमकी छाल, त्रिफला, मोथा इनका काथ प्यास, मुंहसे पानी झरना, खाँसी, अरुचि सन्निपातज्वरको नाश करताहै ॥ ६१ ॥

किलिमकरिकणाकलिंगकटी
घनदशमूलकिरातधान्यविश्वाः ॥
झटिति विधिश्टता जयंति मोहं
ज्वरकसनश्वसनप्रलापदाहान् ॥ ६२ ॥

किलिमेति ॥ किलिमं देवकाष्ठं, करिकणा गजपिप्पली, कलिंगं इंद्रयवः, कट्वी कटुका, घनो मुस्ता, दशमूली "श्रीपर्णिनीज्वलनमंथवसंतदूतीटिंटूकबिल्वमिति तत्पृथुपंचमूलम् ॥ व्याघ्रीबृहत्यतिगुहासुगुहाश्वदंष्ट्रासंयुक्तमेवमिति तत्कथितं कनीयम्" एतन्मिलितं दशमूलं, किरातो भूनिंबो, धान्यं धन्याकः विश्वा शुंठी, विधिना सृताः उत्कथिताः काथीकृताः सत्यः झटिति शीघ्रं मोहादीञ्जयंति नाशयंति । मोहो वैचित्यं, ज्वरो विकारः, कसनं कासः, श्वसनः, श्वासः प्रलापोऽसंबद्धभाषणं दाहः सर्वांगीणस्तान् ॥ ६२ ॥

देवदारु, गजपीपर, इन्द्रजौ, कुटकी, मोथा, दशमूल ( बिल्वश्योणाकगाम्भारीपाटलागणकारिकाः । शालपर्णी पृश्निपर्णी बृहतीद्वयगोक्षुरम् ) चिरायता, धनियां, सोंठ इनका काथ मोह ज्वर कास, श्वास, प्रलाप और दाहको शीघ्र नाश करताहै ॥ ६२ ॥

किरातकटुकामृताकरिकणारसासुव्रता
मरुत्तरुमृगादिनीवृषमहौषधैरन्विताः ॥
सुपुष्करनिदिग्धिकाद्वयदुरालभाशृंगिका
जयंत्यपि विपत्करं सपदि सन्निपातज्वरम् ॥ ६३ ॥

किरातेति ॥ किरातो भूनिंबः, कटुका कट्वी, अमृता गुडूची, करिकणा गजपिप्पली, रसा रास्ना, सुव्रता शठी, मरुत्तरुः देवदारु, मृगादनी इन्द्रवारुणी, वृषो वासा, महौषधं शुंठी, एतैरन्विता युक्ता पुष्करेण सह वर्तमाना पुष्करमूलसहिताः । निदिग्धिकाद्वयं व्याघ्रीद्वयं, दुरालभा धन्वयासः, शृंगिका कर्कटशृंगी एषां क्वाथः विपत्करमपि विपदमतिपीडां



मृत्युं वा करोतीति विपत्करं सन्निपातं ज्वरं जयंति । अयं च समदो... त्रये प्रयोज्यः ॥ ६३ ॥

चिरायता, कुटकी, गिलोय, गजपीपर, रास्ना, कचूर, देवदारु और इन्द्रायणकी जड अडूसा, सोंठ, पहुकरमूल, दोनों कटेरी, जवासा, काकडासींगी इनका काथ अत्यन्त दुःखदेनेवाले सन्निपातको भी शीघ्र दूर करताहै ॥ ६३ ॥

बिल्वाश्मभेदकत्रिवृत्फलपूरमूल-
क्षुद्राद्वयं सममितोऽष्टगुणोऽनिलारिः ॥
गोमूत्रयुक्रुचकहिंगुविडैरुपेतः
क्वाथः सहृद्रुजमपास्यति सन्निपातम् ॥ ६४ ॥

बिल्वेति ॥ बिल्वं श्रीफलम्, अश्मभेदः पाषाणभेदः, त्रिवृत त्रिवृता, फलपूरो बीजपूरः, एतेषां मूलं; मूलेति बिल्वादिभिः संबध्यते क्षुद्राद्वयं बृहतीद्वयं, रुचकं सौवर्चलं, हिंगु रामठं, विडं विडलवणम्, एतैरुपेतः समभागः इतः षट्कात । अनिलारिः एरंडमूलः, अष्टगुणः समस्तद्रव्यादष्टगुणः एरंडो गोमूत्रेण युक्तः । रुचकं सौवर्चलं, हिंगु रामठं, विडं विडलवणं, एतैरुपेतः क्वाथो हृद्रुजा हृच्छूलेन सह वर्तमानं हृद्रुजमित्यनेन वातोल्बणविषयत्वं सूचितं सन्निपातं अपास्यति नाशयति । गोमूत्रमत्र वाष्कयिणं ग्राह्यम् उक्तं च-" योषितोऽपि स्रवंत्येव वीर्यं पुंसः समागमे ॥ तथा पयो वाष्कयिणं विण्मूत्रं तच्च नीरुजम्" इति ॥ ६४ ॥

वेल, पाषाणभेद, निशोथ, बिजोरा इन चारोंकी जड दोनों कटेरी ये छः औषधी समभाग और एरण्डकी जड आठगुनी, गोमूत्र, काला नोन, हींग, विडलवण इनका काथ हृदयकी पीडा सहित सन्निपातज्वरको दूर करताहै ॥ ६४ ॥

पुनर्नवापालिनिपंचमूल-
पंचांगुलाः पंचमुखास्यमिश्राः ॥
छिन्नायुताश्छिन्द्युरुदग्रवेगं
गोमूत्रसिद्धा गुरुसन्निपातम् ॥ ६५ ॥

पुनर्नवेति ॥ पुनर्नवा वर्षाभूः, पालिनी त्रायंती, पंचमूलं बिल्वादि महत्, प्रथमातिक्रमणे कारणाभावात् । वातकफघ्नत्वाच्च पंचांगुल एरंडः, पंचमुखो वासा, छिन्नायुता गुडूचीसहिता एते गोमूत्रेण सिद्धाः

कथिताः उदग्रवेगम् उत्कटवेगं सन्निपातं छिन्द्युः नाशयेयुः । गोमूत्रकथनोपदेशेन क्काथस्यास्य कफोल्बणविषयत्वं सूचितम् ॥ ६५ ॥

पुनर्नवा ( साँटकी जड ) ब्रबप्सा, पञ्चमूल, एरण्डकी जड, अडूसा, गिलोय इनका गोमूत्रसे सिद्धकियाहुआ क्वाथ प्रचण्ड वेगयुंक्त सन्निपातको दूर करताहै । गोमूत्रसे क्वाथ करनेका उपदेश कफोल्बण सन्निपातको दूर करनेवाला है ॥ ६५ ॥

सिंही व्याघ्री ताम्रमूली पटोली
शृंगी पद्मा पुष्करं रोहिणी च ॥
साकं शट्याः शैलमल्लीजबीज-
वर्गः प्रोक्तः सन्निपातारिशेषः ॥ ६६ ॥

सिंहीति ॥ सिंही व्याघ्री, बृहतीद्वयं ताम्रमूली धन्वयासः, पटोली कुलकः, शृंगी कर्कटशृंगी, पद्मा भार्गी, पुष्करं पुष्करमूलं, रोहिणी कटुकी, शट्याः साकं कर्चूरेण सार्द्धं शैलमल्ली कुटजः तद्बीजं " कुटजो गिरिमल्लिका " इति हलायुधः । एष वर्गः सन्निपातारिः प्रोक्तः कफप्रायेऽस्य प्रयोगः ॥ ६६ ॥

दोनों कटेरी, जवासा, परवलके पत्ते, काकडासींगी, भारंगी, पुहकरमूल, कुटकी, कचूर, इन्द्रजौ, इनका क्वाथ सन्निपातरूपी शत्रुको दूर करनेवाला है । कफोल्बण सन्निपातमें इसका प्रयोग करना चाहिये ॥ ६६ ॥

शृंगीशटींद्रयवधन्वयवासवाट्य-
पद्मापटोलकुलकादशमूलसिद्धम् ॥
पीत्वा कषायमिमकं प्रणिहंति कष्टा-
नष्टादशांगमखिलानपि सन्निपातान् ॥ ६७ ॥

शृंगीति ॥ शृंगी कर्कटशृंगी, शटी कर्चूरः, इंद्रयवः धन्वयवासः अनंता, वाट्यं पुष्करमूलं, पद्मा भारंगी, पटोलः कुलकः, कटुका कट्वी, दशमूलम् एतैः सिद्धम् इमकम् एतं अष्टादश औषधानि अंगानि यस्य सः तं कषायं पीत्वा पुमान् अखिलान् समस्तान् कष्टान् क्रूरान् सन्निपातान् प्रणिहंति नाशयति । अखिलेत्यनेनोत्सर्गतः सन्निपातमात्रेऽस्य प्रयोग इति सूचितम्, इमकम् इत्यत्र अव्ययसर्वनाम्नामिंत्यकच् ॥ ६७ ॥



काकडासींगी, कचूर, इन्द्रजौ, जवासा, पुहकरमूल, भारंगी, परवलके पत्ते, दशमूल इन अठारह औषधियोंका सिद्ध क्वाथ सम्पूर्ण सन्निपातसम्बन्धी दुःखोंको दूर करताहै ॥ ६७ ॥

कफप्राये कुर्यात्कवलमतितीक्ष्णाम्ललवणै-
र्गलोरस्थश्लेष्मोल्बणजनितजाड्यप्रहतये ॥
मुहुर्नस्यं निद्रोपहतमनसामंजनमपि
प्रमोहप्रध्वस्त्यै मरिचकुनटीसिंधुमधुभिः ॥ ६८ ॥

कफेति ॥ वैद्य इति शेषः । कफः प्रायो बहुलो यस्यासौ कफप्रायः तस्मिन्पुंसि अतितीक्ष्णाम्ललवणैः अतितीक्ष्णम् आर्द्रकस्वरसादिकम्, अम्लं बीजपूरकेसरादिकम्, लवणं सैंधवादिकं तैः कवलं कुर्यात् । यद्वा । कफप्राये कफोल्बणे सन्निपाते । कस्मै हेतवे ? गलेति-गलः कंठः उरः हृदयं तयोः स्थः वर्तमानो यः श्लेष्मा तेन उल्वणम् अधिकं जनितं उत्पादितं यज्जाड्यं स्तंभनाभावः तस्य प्रहतये नाशाय । मुहुरिति-सन्निपातेन जनितनिद्रया उपहतं प्रतिहतं मनो येषां तेषां मुहुर्वारंवारम् एभिरौषधैर्नस्यं देयम् । तैरेवांजनं कार्यं कैः मरिचः तीक्ष्णः, कुनटी मनःशिला, सिंधुः सैन्धवं, मधु क्षौद्रं, किंभूतैः प्रकृष्टं मोहः प्रध्वस्तो यैः । इदानीं संनिपातस्य प्रकृतिं समसमवेतविकृतिविषमसमवेतास्तानि तैः ॥ ६८ ॥

कफोल्बण सन्निपातमें अत्यन्त तीक्ष्ण अदरख आदिकोंका स्वरस अम्ल बिजोरेकी केशर आदिक, लवण सैन्धव आदिकोंका मुखमें धारण किया हुआ कवल ( ग्रास ) गले और छातीमें स्थित कफकी अधिकतासे उत्पन्नहुई जडता ( शरीरका जकडना ) को दूर करताहै । निद्रासे नष्ट होगयाहै मन जिसका अर्थात् बेहोश मनुष्यकी अज्ञानता दूर करनेके लिये काली मिरच, मनसिल, सैंधा नोन, सहतसे मिलाकर नस्य तथा अञ्जन करना चाहिये ॥ ६८ ॥

केचिदिह सन्निपातास्त्रयोदशाहुश्चयोत्कटैर्दोषैः ॥
उत्कृष्टमध्यहीनैकद्वित्रिकयोगभेदेन ॥ ६९ ॥

भेदयोरनंतरप्रकारत्वात्संकलनार्थं त्रयोदशविधत्वमाह-केचिदिति ॥ केचित् चरकादयः इह संनिपाताधिकारे सन्निपातान् तज्जान् ज्वरान्, त्रयोदश आहुः कथं चयेत्यादि-चयेन वृद्ध्या उत्कृष्टैः तुल्यकक्ष्यैरिति यावत् । तादृशैर्दोषैः तथा उत्कृष्टश्च मध्यश्च हीनश्च तादृशः एकः तादृशौ द्वौ वा यस्मिन्, तादृशं च तत्त्रिकं च तस्य योगः संबंधस्तद्भेदेन उत्कृष्टा-

द्वित्रयं च वृद्धेरेव त्रयोदशानामेषां दोषवृद्धिभेदत्वात् । तदुक्तं वाग्भटे- " त्रयोदशसमस्तेषु षड्द्वयेकातिशयेन तु ॥ एकं तुल्याधिकैः षड्वा तारतम्यविकल्पनात् ॥ पंचविंशतिरित्येवं वृद्धैः " इति ॥ तेन उत्कृष्टो मध्यतमः मध्यो वृद्धतरः हीनो वृद्ध इत्यर्थः । अत एवात्र हीनः तीक्ष्णमिति व्याख्यानमसत् क्षीणानां ज्वरानारंभकत्वाच्च । अत्र च योग्यतावशाद्धत्कृष्टादिशब्दानामेकशब्देन संबंधः, द्विशब्देन तु उत्कृष्टहीनशब्दयोरेव नतु मध्यशब्दस्य । मध्यत्वस्योत्कृष्टहीनसापेक्षत्वेन त्रिष्वेवैकतरस्य संभवात, तद्भेदस्य प्राचीनैरनुक्तत्वाच्च । तथाच-वातादिषु वृद्धेष्वेव उत्कृष्टो मध्यो हीनश्च, एक उत्कृष्टो द्वौ हीनौ द्वा उत्कृष्टौ एको हीनो वा यस्मिन् त्रिके इत्यर्थः पर्यवस्यति । यद्वा । उत्कृष्टमध्यहीनाश्चैकद्वित्रयश्चेति विग्रहः । स्वार्थे कः । अत्र च उत्कृष्टशब्दस्यैव त्रिशब्देन संबंधः । उत्कृष्टमध्यहीनशब्दानां च एकद्विशब्दवाच्यम् । चयोत्कटैः चयात्स्वस्थानवृद्धैः उत्कृष्टैः प्रकुपितैरिति यावत् । हेतौ तृतीया । प्रकुपितैर्दोषैः हेतुभिः संनिपातान् त्रयोदशानाहुरित्यर्थः । व्याख्याद्वयेप्येकस्योत्कृष्टादिषु षट् । अथ वायुरुत्कृष्टः, पित्तं मध्यं, कफो हीनः, एवं वायुकफपित्तानि २ पित्तवायुकफाः ३ पित्तकफवायवः ४ कफवायुपित्तानि ५ कफपित्तवायवः ६ इति । एकस्योत्कर्षे द्वयोर्हानौ च त्रयः वायुरुत्कृष्टः पित्तकफौ हीनौ १ एवं पित्तं वातकफौ २ कफो वायुपित्ते ३ द्वयोरुत्कर्षे एकस्य हानौ च त्रयः । वायुपित्ते उत्कृष्टे कफो हीनः १ एवं वायुकफौ पित्तम् २ पित्तकफौ वायुरिति ३ एवं द्वादश समुत्कृष्टाः स्युस्त्रयः । इति त्रयोदशस्तु प्रथमव्याख्याने, चयोत्कटैरित्यनेन द्वितीयव्याख्याने उत्कृष्टान्वितत्रिशब्देनोच्यत इति विशेषः । तदुक्तं चरके-"द्व्युल्बणैकोल्बणैः षट् च हीनमध्यादिकैश्च षट् ॥ समैरेको विकारश्च संनिपातास्त्रयोदश" इति । अथ क्रमेण लक्षणानि । "प्रवृद्धमध्यहीनैश्च संनिपातो यदा भवेत् ॥ तस्य रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥ प्रलापायाससंमोहाः कंपमूर्च्छारतिभ्रमाः ॥ एकपक्षाभिघातास्ते तत्राप्येतद्विशेषतः ॥ एकः पक्षाभिघातश्च" इति । तथा-"एष संमोहनो नाम संनिपातः सुदारुणः ॥ वृद्धहीनाभिमध्यैश्च संनिपातो यदा भवेत् ॥ तस्य रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥ प्रलापायाससंमोहाः कंपमूर्च्छारतिभ्रमाः ॥ मन्यास्तंभेन मृत्युश्च तत्राप्येतद्विशेषणम् ॥ २ ॥ मध्यप्रवृद्धहीनैश्च संनिपातो यदा भवेत ॥ तस्य रोगास्त एवोक्ता यथादोषबला-



श्रयाः ॥ मोहप्रलापमूर्च्छाः स्युर्मन्यास्तंभशिरोग्रहः ॥ कासश्वासौ भ्रमस्तंद्रा संज्ञानाशो हृदि ग्रहः ॥ खेभ्यो रक्तं विसृजति सरक्तस्तब्धनेत्रता ॥ " तत्राप्येते विशेषाः स्युः-"अर्वाक् त्रिरात्रान्मृत्युश्च तंद्रावान् ध्वस्तलोचनः ॥ ३ ॥ हीनातिवृद्धमध्यैश्च संनिपातो यदा भवेत् ॥ तस्य रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥ हृदयं दह्यते चास्य यकृत्प्लीहांत्रफुप्फुसाः ॥ पच्यंतेऽत्यर्थमूर्ध्वाधः पूयशोणितनिर्गमः ॥ शीतदंतश्च मृत्युश्च तत्राप्येतद्विशेषतः ॥ ४ ॥ मध्यहीनाधिकैर्दोषैः संनिपातो यदा भवेत ॥ तस्य रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥ अंतर्दाहो विशेषोऽत्र ब्रवीतुं नैव शक्यते ॥ रक्तमालक्तकेनैव लक्ष्यते मुखमंडलम् ॥ पित्तेनाकर्षितः श्लेष्मा हृदयात्र प्रसिच्यते ॥ इषुणेवाहतं पार्श्वं तुद्यते खन्यते हृदि ॥ प्रलापकश्वासहिध्मा वर्द्धते तु दिनेदिने ॥ जिह्वा दग्धा खरस्पर्शा गलः शूकैरिवावृतः ॥ विसर्गं नाभिजानाति कूजते च कपोतवत् ॥ अतीव श्लेष्मणा पूर्णः शुष्कवक्त्रोष्ठतालुकः ॥ तंद्रानिद्रार्त्तियोगार्त्तो हतवाङ्निर्हतद्युतिः ॥ न रतिं लभते नित्यं विपरीतानि चेच्छति ॥ आयम्यते च बहुशः सरक्तं ष्ठीवतेऽल्पशः ॥ एष कर्कोटको नाम संनिपातः सुदारुणः ॥ ॥ ५ ॥ हीनमध्याधिकैर्यस्य वातपित्तकफैः क्रमात् ॥ संनिपातः प्रभवति पीडयेद्दोषदर्शनात् ॥ अल्पशूलं कटीतोदो मध्ये दाहरुजा भ्रमः ॥ भृशं क्लमः शिरोवस्तिमन्याहृदयवाग्रुजः ॥ प्रमीलकः श्वासहिक्काकासजाड्यविसंज्ञताः ॥ प्रथमोत्पन्नमेनं तु साधयेत्तु कदाचन ॥ एतस्मिन्संनिवृत्ते तु कर्णमूले सुदारुणा ॥ पिटिका जायते जंतोर्यथा कृच्छ्रेण जीवति ॥ स वै दारकसंज्ञोऽयं सन्निपातः सुदारुणः ॥ त्रिरात्रात्परमेतस्य व्यर्थमौषधकल्पनम् ॥६॥ वातोल्बणः सन्निपातो यस्य जंतोः प्रकुप्यति ॥ तस्य तृष्णाज्वरो ग्लानिः पार्श्वरुग्दृष्टिसंक्षयः ॥ पिंडकोद्वेष्टनं दाह उरुसादो बलक्षयः ॥ सरक्तं चास्य विण्मूत्रं शूलं निद्राविपर्ययः ॥ निर्भिद्यते गुदश्चास्य वस्तिश्च परिदह्यते ॥ आयम्यते भिद्यते च हिक्कते विलपत्यपि ॥ मूर्च्छते स्फार्यते रौति नाम्ना विस्फारकः स्मृतः ॥ ७ ॥ पित्तोल्बणः संनिपातो यस्य जंतोः प्रकुप्यति ॥ तस्य दाहज्वरो घोरो बहिरंतश्च वर्द्धते ॥ शीतं च वेपमानस्य कुरुतः कफमारुतौ ॥ ततश्चैनं प्रबाधंते हिक्काश्वासप्रमीलकाः ॥ विसूचिका पर्वभेदः प्रलापो गौरवं भ्रमः ॥ नाभिपार्श्वे रुजावृद्धिरस्विन्नस्य प्रवर्त्तते ॥ स्विद्यमानस्य रक्तं च स्रोतोभ्यः संप्रवर्त्तते ॥ शूलेन पीड्यमानस्य तृष्णा श्वासः

प्रवर्द्धते ॥ असाध्यः संनिपातोऽयं शीघ्रकारीति कथ्यते ॥ न हि जीवत्यहोरात्रमनेनाविष्टविग्रहः ॥ ८ ॥ कफोल्बणः संनिपातो यस्य जंतोः प्रकुप्यति ॥ तस्य शीतज्वरस्वप्नगौरवालस्यतंद्रयः ॥ छर्दिर्मूर्च्छा तृषा दाहस्तृट्यरोचकहृद्ग्रहाः ॥ ष्ठीवनं मुखमाधुर्यं श्रोत्रवाग्दृष्टिनिग्रहः ॥ अथात्र स्नाति भुंक्ते च त्रिरात्रं नैव जीवति ॥ मेदोगतः संनिपातः कम्पनः समुदाहृतः ॥ कामान्मोहाच्च लोभाच्चामयाच्चायं प्रवर्तते ॥ ९ ॥ वातपित्ताधिको यस्य संनिपातः प्रकुप्यति ॥ तस्य ज्वरो मदस्तृष्णामुखशोषः प्रमीलकः ॥ आध्मानारुचितंद्राश्च कासश्वासभ्रमश्रमाः ॥ मुनिभिर्बभ्रुनामायं सन्निपात उदाहृतः ॥ १० ॥ पित्तश्लेष्माधिको यस्य संनिपातः प्रकुप्यति ॥ अंतर्दाहो बहिः शीतं तस्य तृष्णा च वर्द्धते ॥ तुद्यते दक्षिणं पार्श्वं मुखशीर्षगलग्रहाः ॥ निष्ठीवेत्कफपित्तं च कृच्छ्रात्कोठश्च जायते ॥" फल्गुरिति ध्येयम् ॥ ११ ॥ "श्लेष्मानिलाधिको यस्य सन्निपातः प्रकुप्यति ॥ तस्य शीतज्वरो मूर्च्छा क्षुत्तृष्णा पार्श्वसंग्रहः ॥ शिरोगौरवमालस्यं मन्यास्तंभः प्रमीलकः ॥ उदरं दह्यते चास्य कटिर्वस्तिश्च दूयते ॥ संनिपातः स विज्ञेयो मकरीति सुदारुणः ॥ १२ ॥ व्याधिभ्यो दारुणेभ्यश्च वज्रशस्त्राग्निसंनिभः ॥ केवलोच्छ्वासपरमस्तब्धांगः स्तब्धलोचनः ॥ त्रिरात्रोपरमे तस्य जंतोर्हरति जीवितम् ॥ वदंति संनिपातं तं भिषजः कूटपालकम् ॥ कूटस्थैर्जायते दोषैर्वलिभिः कूटपालकः" ॥ १३ ॥ इति । इदमत्रावधेयं वृद्धमध्यमेत्यादिवचनेषु तस्य रोगा इत्यादिना प्रकृतिसमसमवेतानां प्रलापायासेत्यादिना विकृतिविषमसमवेतानां च लक्षणमुक्तम् । तथाहि–तत्र तावद्यथादोषेत्यनेन दोषानुरूपत्वं प्रतिपाद्यते । एवमुत्तरत्र हीनमध्याधिकैरित्यादौ तस्य रोगा इत्यादेः पूर्वमसकृदुक्तत्वेन झटित्युपस्थितैर्नोक्तिः, अत एव चरकोक्तानि लक्षणानि, यथादोषानुरूपत्वात्प्रकृतिसमसमवेतानामवरूपतोक्ता । तत्राप्येतद्विशेषणमित्यनेन त्वैकपक्षाभिघातस्य वातादिज्वरलिंगेष्वनुक्तेस्तदनुक्तानि च ह्युल्बणैकेत्यादिक्रमेण लिख्यंते । "भ्रमः पिपासा दाहश्च गौरवं शिरसोतिरुक् ॥ वातपित्तोल्बणे विद्याल्लिंगं मंदकफज्वरे ॥ १ ॥ शैत्यं कासोऽरुचिस्तंद्रा पिपासा दाहरुक् तथा ॥ वातश्लेष्मोल्बणे व्याधौ लिंगं पित्तज्वरे विदुः ॥ २ ॥ छर्दिः शैत्यं मुहुर्दाहस्तृष्णा मोहोऽस्थिवेदना ॥ मंदवाते व्यवस्यंति लिंगं पित्तकफोल्बणे ॥ ३ ॥ संध्यस्थिशिरसः शूलं



प्रलापो गौरवं भ्रमः ॥ वातोल्बणे स्याद्यनुगे तृष्णाकंठास्यशुष्कता ॥ ४ ॥ तंत्रांतरे तु–कासश्वासौ भ्रमो मूर्च्छा प्रलापो मोहवेपथुः ॥ पार्श्वस्य वेदनालंभः कषायत्वं मुखस्य च ॥ वातोल्बणस्य लिंगानि संनिपातस्य लक्षयेत् ॥ ५ ॥ आलस्यारुचिहृल्लासदाहवम्यरतिभ्रमैः ॥ कफोल्बणं संनिपातं तंद्राकासेन चादिशेत् ॥ ६ ॥ रक्तविण्मूत्रता दाहः स्वेदस्तृड्बलसंक्षयः ॥ मूर्च्छा चेति त्रिदोषे स्याल्लिंगं पित्तगरीयसि ॥ ९ ॥ तथान्यत्र–अतीसारो भ्रमो मूर्च्छा मुखपाकस्तथैव च ॥ गात्रे च बिंदवो रक्ता दाहस्तीव्रः प्रजायते ॥ पित्तोत्तरस्य लिंगानि संनिपातस्य लक्षयेत् ॥ ॥ ५ ॥ जडता गद्गदा वाणी रात्रौ निद्रा भवत्यपि ॥ प्रस्तब्धे नयने चैव मुखमाधुर्यमेव च ॥ कफोत्तरस्य रूपाणि संनिपातस्य लक्षयेत् ॥ ६ ॥ प्रतिश्यायच्छर्दिरालस्यं तंद्रारुच्यग्निमार्दवम् ॥ हीनवाते मध्यपित्ते चिह्नं श्लेष्माधिके मतम् ॥ ७ ॥ शीतको गौरवं तंद्रा रुच्यल्पत्वं तथा इति ॥ हारिद्रनेत्रमूत्रत्वग्दाहस्तृष्णाभ्रमोऽरतिः ॥ हीनवाते मध्यकफे लिंगं पित्तेऽधिके मतम् ॥ ९ ॥ शिरोरुग्वेपथुश्वासप्रलापच्छर्द्यरोचकः ॥ हीनपित्ते मध्यकफे लिंगं वाताधिके मतम् ॥ १० ॥ वर्चोभेदाग्निदौर्बल्यं तृष्णादाहोरुचिर्भ्रमः ॥ कफहीने मध्यवाते लिंगं पित्ताधिके मतम् ॥ ११ ॥ कासश्वासप्रतिश्यायमुखशोषार्तिपार्श्वरुक् ॥ कफहीने मध्यपित्ते लिंगं वाताधिके मतम् ॥ १२ ॥ समैर्दोषैः प्रकुपितं संनिपातं निबोध मे ॥ त्रयाणामपि दोषाणां समरूपाणि लक्षयेत् ॥१३॥" इति । वस्तुतस्तु 'तस्य रोगास्त एवोक्ता यथादोषबलाश्रयाः' इत्येवं प्रकृतिसमसमवेतानां लक्षणं 'भ्रमः पिपासादाहश्च' इत्यादिवत्प्रदर्शनमात्रं न तु नियमपरम्,–अन्यथा दोषानुरूपाणामन्येषामपि प्रादुर्भावे तत्त्वं न स्यात्, एवं च क्वचित्तंत्रांतरे वातादिज्वरानुक्तलिंगपाठेन यत्संनिपातस्य लक्षणं तद्विकृतिविषमसमवेतस्यैव । यथा सुश्रुते–"नात्युष्णशीतोष्णसंज्ञो भ्रांतप्रेक्षाहतप्रभः ॥ खरजिह्वः शुष्ककंठः स्वेदविण्मूत्रवर्जितः ॥ साश्रुनिर्भुग्ननयनो भक्तद्वेषी हतस्वरः ॥ श्वसन्निपतितः शेते प्रलापोपद्रवैर्युतः ॥ अभिन्यासं तु तं प्राहुर्हतौजसमथापरः ॥" इति । एवं चोभयोरामंत्र्येऽपि दोषत्रयोल्बणत्वादेरवश्यं भावात्त्रयोदशत्वेन संकलनं युक्तमिति भावः । मधुकोषकारस्तु–त्रयोदशत्वं प्रकृताविव न विकृतौ तस्या अनंतप्रकारत्वादित्याह । नूनं तत्रापि दोषत्रयोल्बणत्वादेरनतिक्रमादिति ॥ आर्याछंदः ॥ अत्र तंत्रांतरोक्तो विशेषः । "वर्द्धनैर्वापि हीनस्य ह्रायनैरुच्छ्रितस्य च ॥ कफ-

स्थानानुपूर्व्या वा संनिपातज्वरे क्रिया ॥" अत्रादौ कफस्य जयः पश्चात्पित्तस्य। तदुक्तं–"स्थानतः केचिदिच्छंति प्राक्तावच्छ्लेष्मणो वधम् ॥ शिरस्युरसि कंठे च प्रलिप्तेऽन्नरुचिः कुतः ॥ तदभावे कथं भोज्यपानद्रव्यावचारणा॥असत्यभ्यवहारे च कुतो दोषविनिग्रहः ॥ तस्मादादौ कफो जेयः कायद्वारार्गलो हि सः ॥ मध्यस्यापि ततः पित्तमाशुकारि च चिंत्यते ॥ अतो वातसखस्यास्य कुर्यात्तदनु निग्रहम् ॥ अधःस्थायी च तदनु निग्राह्यः स्यात्समीरणः ॥" इति। यत्तु "निर्हरेत्पित्तमेवांपि ज्वरेषु समवायिषु ॥ दुर्निवारतरं तद्धि ज्वरार्त्तेषु विशेषतः ॥" इति। तथा–"क्रमान्मरुत्पित्तकफान् सर्वत्र सदृशे बले ॥ वातादीनां यथापूर्वं यतः स्वाभाविकं बलम् ॥" इति च मतं तदुद्रेकविषयं तदुक्तं संग्रहे–"विज्ञाय कर्मभिः स्वैस्वैर्दोषोद्रेकं यथामतम् ॥ भेषजं योजयेत्तत्र तत्र कुर्यान्न तु क्रमम्। " इति। तत्रैवं 'सर्वत्र सदृशे कले' इत्युक्तिविरोधः किंचिदूनेऽपि सदृशशब्दप्रयोगादिति ॥ ६९ ॥

चरक आदि महर्षि दोषोंकी क्षयवृद्धि तथा उत्कृष्ट मध्य हीन तथा एक या दो हैं जिस त्रिकमें ऐसे त्रिकके योगसे सन्निपात १३ तरहका है ॥ ६९ ॥

संधिगांतकरुग्दाहचित्तभ्रमककर्णकः ॥
कंठकुब्जकशीतांगं तंद्रिकाः सप्रलापकाः ॥
रक्तष्ठीवी भुग्ननेत्रोभिन्यासो जिह्वकाभिधः ॥
कष्टसाध्याः स्वभावेन संनिपातोद्भवा ज्वराः ॥ ७० ॥

चिकित्साविशेषप्रतिपादनार्थं संधिगादिभेदेन त्रयोदशविधत्वमाह–संधिगेति ॥ कष्टसाध्या इत्यप्युपलक्षणं संधिगादीनां चयोत्कृष्टमध्यहीनादिभेदत्वं तथा प्रतिपादयिष्यामः ॥ ७० ॥

संधिग १ अन्तक २ रुग्दाह ३ चित्तभ्रम ४ कर्णक ५ कर्णकुब्ज ६ शीतांग ७ तन्द्रिक ८ प्रलापक ९ रक्तष्ठीवी १० भुग्ननेत्र ११ अभिन्यास १२ जिह्वक ये बारह सन्निपातसे पैदाहुए ज्वर स्वभावसे ही कष्टसाध्य हैं ॥ ७० ॥

समुद्भवति संधिषु श्वयथुरुग्ररुक् सज्वर-
स्तनौ च मरुदर्तयः प्रततमंगमर्दादयः ॥
दरिद्रमिव कामिनी त्यज्यति यत्र निद्रा नरं
त्रिदोषजनितं ज्वरं तमिह संधिगं चक्षते ॥ ७१ ॥



अथ त्रयोदशानां मध्ये आदौ संधिगमाह–समुद्भवतीति ॥ श्वयथुः शोथः संधिषु समुद्भवति प्रथमं संभवति । किंभूतः श्वयथुः । उग्ररुक् उग्रा दुःसहा रुग्व्यथा यस्य सः सज्वरः ज्वरेण सह वर्तमानः। तथा तनौ देहे प्रततं सततम् अंगमर्दादयो गात्रस्य मोटनं तोदो भेदादयो मरुदर्त्तयो वातपीडाश्च समुद्भवंति। यत्र यस्मिन् संधिगे ज्वरे निद्रा नरं त्यजति। कमिव कामिनी दरिद्रं नरमिव। बुधा तं ज्वरं त्रिदोषजनितं त्रिदोषोद्भवंसंधिगं चक्षते कथयंति । इह संनिपातप्रकरणे संधिगतवातमयत्वात्संधिगं चक्षते । चकारः श्लेष्मतापबलहानिजागरमिति संनिपातकलिकोक्तसूचनार्थः ॥ ७१ ॥

सन्धिस्थानोंमें सूजन, पीडाकी अधिकता, ज्वर, शरीरमें वायुसे अंगका मरोडना, सूचीके सदृश पीडा, फूटन आदि होतीहै । जैसे कामिनी स्त्री दरिद्र मनुष्यका परित्याग करदेतीहै वैसे ही जिस सन्निपातमें निद्रा ( नींद ) मनुष्यको त्यागदे उस तीनों दोषोंसे उत्पन्नहुएको संधिग सन्निपात कहतेहैं । इस सन्निपातप्रकरणमें संधिगत वायु होनेसे इसको संधिग सन्निपात कहतेहैं ॥ ७१ ॥

संधयः श्लेष्मणः स्थानं तत्स्थश्लेष्मयुतोऽनिलः ॥
लंघनस्वेदनाभ्यासात्सद्यो याति निरामताम् ॥ ७२ ॥

संधय इति ॥ यतः संधयः श्लेष्मस्थानम् अतः तत्स्थः संधिषु स्थितः अनिलो वायुः श्लेष्मणा युतो भवति। एतेनोल्बणवातत्वं मध्यकफत्वं सूचितम्। परिशेषाद्धीनपित्तत्वं च, अतस्तादृशो वातो लंघनं स्वेदनं च तयोरभ्यासात् पुनः पुनः करणात् सद्यः तत्क्षणमेव निरामतां पीडारहिततां याति । लंघनादिना आमयश्लेष्मशोषणात् संधिशोफादिविकारकारी न भवतीति भावः । 'न लंघयेन्मारुतजे ज्वरे' इत्यपवादोऽत्र स्वेदनं च "खर्परभृष्टघटस्थितकांजिकसिक्तो हि वालुका स्वेदः ॥" इत्याद्युक्तं तच्च रूक्षमेव "रूक्षः स्वेदो विधातव्यो वालुकारुचकैस्तथा ॥ उपनाहाश्च कर्तव्यास्तेपि स्नेहविवर्जिताः ॥" इत्युक्तेः ॥ ७२ ॥

सन्धियोंमें कफका स्थान है इससे सन्धिमें स्थित हुआ वायु श्लेष्मासे युक्त होताहै, इससे वायुकी अधिकता, कफकी मध्यमता, पित्तकी हीनता सूचन कीहै । कफस्थानमें वायु अधिक होनेसे लंघन स्वेदनके बार बार करनेसे शीघ्र ही मनुष्य निरोगी होताहै क्योंकि लंघनादिकोंसे कफके सूखनेपर संधिमें सूजन वगैरह विकार नहीं होतेहैं ॥ ७२ ॥

रसः स विश्वसिंधूत्त्थः कौलत्थः कुरुतेतमाम् ॥
अमांद्यमनलस्याशु मारुतामयरुग्जयम् ॥ ७३ ॥

सम्यग्लंघितस्य यूषविशेषमाह-रस इति ॥ कौलत्थो रसो यूषः विश्वा शुंठी, सिंधूत्थं सैंधवं, ताभ्यां युक्तः सन् अनलस्य वह्नेः अमांद्यं दीप्तिं आशु कुरुतेतमाम् । अत्यर्थं कुरुते मारुतामयरुग्जयं वातव्याधिपीडानाशं कुरुते । मारुतामयस्य प्रकृतत्वात्संधिगतसंनिपातस्य रुग्जयं कुरुते ॥ ७३ ॥

अच्छीतरह लंघनकियेहुए पुरुषको कुलथीका यूष, सोंठ और सेंधेनोनसे युक्त शीघ्र ही अग्निमांद्यको दूर करताहै । वातव्याधिकी पीडाको भी शीघ्र नाश करताहै । अर्थात् संधिगत सन्निपातकी पीडाको दूर करताहै ॥ ७३ ॥

शठीसुरतरूत्तमास्थविरदारुरास्नाः समाः
सनागरसुधालताः पिब शतावरीसंयुताः ॥
मृदुज्वलनपाचिताः सह पुरेण संधिग्रहं
व्यथाप्रहतये तथा शिशिरसेवनं मा कृथाः ॥ ७४ ॥

शठीति ॥ शठी कचूरः, सुरतरुः देवदारु, उत्तमा त्रिफला, स्थविरदारु वृद्धदारु, रास्ना एता औषधयः समाः । नागरं शुंठी, सुधालता गुडूची, आभ्यां सहिता शतावरी शतमूली, तया युक्ताः मृदु ज्वलनं वह्निमान्द्यं तेन पाचिताः पक्वाः सत्यः पुरेण गुग्गुलुना सह वर्तमानाः त्वं पिब, पिबेतिप्रेरणम् । पातेर्लोड्युष्मदि मध्यमपुरुषैकवचनम् । किमर्थं पानं संधिग्रहव्यथाप्रहतये संधीनां पर्वणां ग्रहः ग्रहणं बंधनं तेषु व्यथा पीडा तस्याः प्रहतये नाशाय । अस्मिन् रोगे शिशिरसेवनं शिशिरस्य स्पर्शतो वीर्यतो वा सेवनं मा कृथा मा कुरु । अत एवोष्णसेवनं कुरु । अत एवोष्णसेवनं सूचितम् ॥ ७४ ॥

कचूर, देवदारु, त्रिफला, विधारा, रासना, सोंठ, गिलोय, शतावरी ये सब समभाग औषधियोंका मृदु अग्निसे पकायाहुआ और उसमें गूगल मिलायाहुआ क्वाथ संधिग्रहकी ( जोडको जकडनेकी ) पीडाको हरताहै और शीतल वस्तुका स्पर्श तथा वीर्यसे भी सेवन न करना चाहिये । अर्थात् गरम वस्तुकाही सेवन करना चाहिये ॥ ७४ ॥

वचाकवचकच्छुरासहचरामृताभंगुरा-
सुराह्वघननागरातरुणदारुरास्नापुराः ॥



वृषातरुणभीरुभिः सह भवंति संधिग्रह-
व्यथोरुजडिमाक्लमभ्रमणपक्षघातद्रुहः ॥ ७५ ॥

वचेति ॥ वचा उग्रा, कवचः पर्पटः, कच्छुरो धन्वयासः, सहचरो पीतपुष्पः कुरंटकः, अमृता गुडूची, भंगुरा अतिविषा, सुराह्वो देवदारु, घनं मुस्तं, नागरं शुंठी, अतरुणदारु वृद्धदारु, रास्ना रसा, पुरो गुग्गुलुः, वृषा वासा, तरुणः एरंडः, भीरुः शतावरी, ताभिः सह वर्तमानाः संधिग्रहादीन् द्रुह्यंति घ्नंति, तादृशा भवंति । संधिग्रहस्य व्यथा पीडा, ऊर्वोः जडिमा जडस्य भावो जाड्यं, क्लमः खेदः, भ्रमणं भ्रमः, पक्षाघातः स्वनामख्यातो वायुरोगस्तान् ॥ ७५ ॥

वच, पित्तपापडा, जवासा, सहजना, गिलोय, अतीस, देवदारु, मोथा, सोंठ, विधारा, रासना, गूगल, अडूसा, एरण्डकी जड, सतावरी इनका क्वाथ संधियोंके जकडनेकी पीडा और जंघाओंका जकडना, खेद, श्रम, पक्षाघात इनको नाश करताहै ॥ ७५ ॥

रास्नैरंडशिफाविश्वादेवदार्व्वमृताभयाः ॥
जयायाशु प्रगल्भंते प्रभंजनभुवां रुजाम् ॥ ७६ ॥

रास्नैरंडेति ॥ रास्ना नाकुली, एरंडशिफा एरंडमूलं "पादो मूलं जटा शिफा" इत्यमरः । विश्वा शुंठी, देवदारु देवकाष्ठम्, अमृता गुडूची, अभया हरीतकी, एता ओषध्यः । प्रभंजनो वायुः "प्रभंजनः स्पर्शनो वातः" इति हलायुधः । प्रभंजनात् भवतीति प्रभंजनभवा पीडा आशुजयाय शीघ्रनाशाय प्रगल्भंते वर्णयंति शक्नुवंतीति यावत् ॥ ७६ ॥

रासना, एरण्डकी, जड, सोंठ, देवदारु, गिलोय, हरड इन औषधियोंका क्वाथ वायुसे उत्पन्न हुई पीडाको जीतनेवाला कहतेहैं ॥ ७६ ॥

सुरदारुशटीसुधालताः सुवहाशुंठियुताः शृता जले ॥
सपुराः शमयंति सेविताः सततं संधिगतं सदागतिम् ॥ ७७ ॥

सुरदार्विति ॥ सुरदारु देवदारु, शटी कर्चूरः, सुधालता गुडूची, सुवहा रास्ना, शुंठी प्रसिद्धा, ताभ्यां सहिताः । किंभूताः एताः जले शृताः उत्क्वथिताः, सपुराः पुरेण गुग्गुलुना सहिताः सेविताः सत्यः सततं निरंतरं संधिगतं संधिषु पर्वसु गतं प्राप्तं सदागतिं वायुं संनिपातमिति यावत् । " सदागतिर्गंधवहः " इत्यभिधानात् । शमयंति नाशयंति ॥ ७७ ॥

देवदारु, कचूर, गिलोय, रासना, सोंठ, इनका काथ गूगलके साथ सेवन कियाहुआ सन्धिगत वायुको नाशकरताहै ॥ ७७ ॥

पथ्याशिवाग्रंथिकसिंहवक्रबिभीतकारग्वधसिद्धमंभः ॥
पीतं सपंचांगुलतैलमाशु प्रभंजनव्याधिमपाकरोति ॥ ७८ ॥

पथ्येति ॥ पथ्या हरीतकी, शिवा आमलकी, ग्रंथिकं पिप्पलीमूलं, सिंहवक्रम् आटरूषकः, सिंहमुखीति निघंटुः, बिभीतकं कलितरुः, आरग्वधो राजवृक्षः, एभिरौषधं सिद्धं कथितमंभ उदकं पंचांगुलतैलेन एरंडतैलेन पीतं सत् आशु शीघ्रं प्रभंजनो वायुस्तस्य व्याधिं पीडां अपाकरोति नाशयति ॥ ७८ ॥

हरड, आमला, पीपरामूल, अडूसा, बहेडा, अमलतास, इनका सिद्ध किया हुआ जल एरण्डके तेलके साथ पियाहुआ वायुकी पीडाको शीघ्र दूर करताहै ॥ ७८ ॥

मुस्तैरंडप्राणदाबाणदारुच्छिन्नारास्नाभीरुकर्चूरतिक्तम् ॥
वासाविश्वापंचमूलीयुगाढ्यं हन्यान्मन्यास्तंभसंधिग्रहार्त्तिम् ७९

मुस्तैरंडेति ॥ मुस्तं घनम्, एरंडो वातारिः, प्राणदा हरीतकी, बाणः कुरंटकः, दारु देवदारु, छिन्ना गुडूची, रास्ना रसा, भीरुः शतावरी, कचूरः शटी, तिक्ता कटुकी, द्वंद्वे समाहारत्वादेकवचनम् । कीदृगेतत् । वासा आटरूषकः, विश्वा शुंठी, पंचमूलीयुगं दशमूलं तेन आढ्यं युक्त-मित्यर्थः । एतदौषधं मन्यास्तंभः मन्ययोः कंठनाडीमुभयतः शिराविषयोः स्तंभः दंडवदनमत्वं संधिग्रहस्यार्तिं पीडां हन्यात् ॥ ७९ ॥

मोथा, एरण्डकी जड, हरड, अरलू, देवदारु, गिलोय, रासना, शतावरी, कचूर, कुटकी, अडूसा, सोंठ, लघु पंचमूल, बृहत् पञ्चमूल इनका काथ मन्यास्तम्भ और संधिग्रहकी पीडाको दूर करताहै ॥ ७९ ॥

संक्षुद्य सर्जरससर्षपसिंधुवार-
निंबच्छदामिषगदाननले निदध्यात् ॥
धूपोऽयमाशु मरुदर्तिमपाकरोति
सिद्धार्थसर्जरसकुन्दुरुनिर्म्मितो वा ॥ ८० ॥

संधिग्रहनाशकं धूपमाह-संक्षुद्येति ॥ सर्जरसो रालः, सर्षपः कटः, सिंधुवारो निर्गुंडी, निंबच्छदं निंबपत्रम्, आमिषं गुग्गुलः, गदं कुष्ठम् ।



एतान् संक्षुद्य संचूर्ण्य अनले वह्नौ ( धूपार्थं ) निदध्यात् । अयं धूपः आशु सहसा मरुदर्तिं वातपीडाम् अपाकरोति दूरीकरोति । यद्वा । सिद्धार्थः श्वेतसर्षपः, सर्जरसो राल इति, कुंदुरुर्निर्यासविशेषः । कुंदुरुः सल्लकी-निर्यासः, वेरजः प्रसिद्धः, एतैर्निर्मितः कृतो वा धूपः ॥ ८० ॥

राल, सरसों, निर्गुंडी, नीमके पत्ते, गूगल, कूट इनका चूर्ण कर धूपके लिये अग्निपर रखे यह धूप वायुकी पीडाको शीघ्र दूर करताहै । अथवा सरसों, कुन्दुरुका गोंद, राल इनकी बनी धूपभी वायुकी पीडाको दूर करताहै ॥ ८० ॥

इति संधिगसन्निपातचिकित्सा ।

---

अन्तक सन्निपातिके लक्षण ।

धुनाति सततं शिरः प्रसरदुग्रदाहारति-
प्रलापकफहिक्कनश्वसनवेदनावानपि ॥
तनूरिव तनूनपाद्युतिरनूनतापा भवे-
त्तमंतकरमंतकाभिधमुदाहरन्ति ज्वरम् ॥ ८१ ॥

अतः परं द्वितीयमंतकाख्यं सन्निपातमाह-धुनातीति ॥ अस्मिन् ज्वरे सततं निरंतरं, शिरः धुनाति पुमानित्यर्थः । तथा अतिशये प्रसरत् सर्वांगं व्याप्नुवत् अत एव उग्रो यो दाहश्च अरतिश्च प्रलापश्च कफश्च हिक्कनं च श्वसनश्च वेदना तोदभेदादिका च सा अस्यास्तीति वेदनावान् अतीति च प्रलापादिभिः संबंधनीयम्, एतेन त्रिदोषोल्बणता सूचिता । तनूः शरीरं तनूनपातो वह्नेर्द्युतिरिव ज्वालेति यावत् । किंभूताः तनूः अनूनतापाः अनूनः अधिकस्तापः संतापो यस्यास्तादृशी । अंतं नाशं करोतीत्यंतकरम् अतएवांतकाभिधं तं ज्वरं उदाहरंति कथयंति । तापदाहयोर्बाह्याभ्यंतरभेदात्र पौनरुक्तम् ॥ ८१ ॥

शिरका निरन्तर कांपना, सम्पूर्ण शरीरमें प्रचण्ड दाह होना, पीडा, बडबडाना, कफ निकलना, हिचकी, श्वास, सुईके चुभनेके समान पीडा, अग्निके समान सब शरीर गरम हो सन्ताप होवे ये लक्षण अन्तक सन्निपातके हैं । यह सन्निपात शरीरका अन्त ( नाश ) करताहै इससे इसको अंतक सन्निपात कहतेहैं ॥ ८१ ॥

विहाय वैद्यो दिनमुष्णवारि
ज्वरारियूषादि गदापहारि ॥

ज्वरच्छिदं जीवितदं च नित्यं
मृत्युंजयं चेतसि चिंतयस्व ॥ ८२ ॥

अस्मिन् संनिपाते चिकित्सां निवारयति-विहायेति ॥ अंतकार्तेति संबुद्धिरर्थाल्लभ्यते वैद्येन उदितम् उक्तम्, उष्णं वारि उष्णोदकं, ज्वरारिर्वक्ष्यमाणो रसः गदापहारि गदः संनिपातादिरोगः तस्य नाशकं यूषादि, आदिपदेन क्वाथादिकं विहाय, ज्वरच्छिदं जीवितदं मृत्युंजयं चेतसि मनसि चिंतयस्व । ईदृशस्य महादेवस्य चिंतितं मृत्युं अति निवारयेदिति ॥ ८२ ॥

वैद्यका कहाहुआ गरम जल, ज्वरारि वक्ष्यमाण रस और सन्निपातको दूर करनेवाले यूप काथ चूर्णादिकोंको छोडकर ज्वरके छेदन करनेवाले जीवनको देनेवाले हमेशा मृत्युको जीतनेवाले महादेवजीका चित्तमें स्मरण करे । अथवा महादेवजीके मंत्र मृत्युञ्जयका स्मरण करे ॥८२॥

कर्पूरप्रकरावदातवपुषं सद्योगमुद्राजुषं
शश्वद्भक्तजनेषु भावकपुषं भालस्फुरच्चक्षुषम् ॥
संपूर्णामृतकुंभसंभृतकरं शुभ्राक्षमालाधरं
पिंगोत्तुंगजटाकलापरुचिरं चंद्रार्द्धमौलिं स्तुहि ॥ ८३ ॥

कर्पूरमिति ॥ अंतकनामा नामसदृशफलत्वात्, औषधमपाकृत्य शिवं शरणं गृहाण । अत एव चंद्रार्द्धः अपूर्णत्वात्पुल्लिंगः मौलौ यस्यासौ चंद्रार्द्धमौलिस्तं संस्तुहि प्रेरणे लोट् युष्मदि मध्यमः । किंभूतं, कर्पूरप्रकरः कर्पूरसमूहस्तद्वद् अवदातं निर्मलं श्वेतं वपुर्यस्य तम् । पुनः किंभूतं, संश्चासौ योगश्च सद्योगस्य मुद्रा आकृतिस्तां जुषति सेवते जुट् तम् । पुनः किंभूतं, शश्वन्निरंतरं भक्तजनेषु भावात् स्नेहात् कं सुखं समूलं पुष्णातीति भावकपुट् तं भावकपुषम् । भाले ललाटे स्फुरच्चक्षुर्यस्यासौ भालस्फुरच्चक्षुः तम् । संपूर्णश्चासौ अमृतकुंभश्च तेन संभृतः पूर्णः करो यस्य तम् । शुभ्रा उज्ज्वला चासौ अक्षमाला स्फटिकमाला तां ध्रियत इति तम् । पिंगा उत्तुंगा अधिका जटास्तासां कलापः समूहस्तेन रुचिरः कमनीयस्तं " सुखशीर्षजलेषु कम् " इति हलायुधः ॥ ८३ ॥

कपूरके समूहके समान श्वेत शरीर उत्तम योगकी मुद्रासे सेवित भक्तजनोंमें स्नेहसे सुखको बढानेवाले मस्तकपर देदीप्यमान है तीसरा नेत्र जिनके, सम्पूर्ण अमृतके कुंभसे भराहुआ है हाथ जिनका, स्फटिककी मालाको धारण करनेवाले, पीली और लम्बी जटाके समूहसे सुन्दर



अर्धचन्द्र है मस्तकपर जिनके ऐसे शिवजी महाराजकी स्तुति अन्तक सन्निपातवाला मनुष्य करे ॥ ८३ ॥

इति अन्तकसन्निपातचिकित्सा ।

---

रुग्दाहसन्निपातज्वरके लक्षण ।

तृषातिशयकृज्ज्वरप्रचुरतापताम्यत्तनुः
शिरःसततचालनव्यथितकंठमन्याहनुः ॥
नरः श्वसिति मुह्यति प्रलपतीति यस्मिन् सकः
स्मृतः प्रततदाहकृन्मुनिवरेण रुग्दाहकः ॥ ८४ ॥

अथ रुग्दाहं व्याचष्टे तस्य लिंगानि-तृषेति ॥ यस्मिन् ज्वरे तृषाया अतिशयं प्रकर्ष करोतीति तादृशस्य ज्वरस्य प्रचुरेण भूयसा तापेनौष्ण्येन ताम्यति ग्लापयति तनुर्यस्य स तथा । शिरसः सततं चालनेन व्यथिताः कंठादयो यस्य तादृशो नरः श्वसिति श्वासयुक्तो भवति, मुह्यति मोहयुक्तो भवति, प्रलपति मिथ्या वदति, सः कः कुत्सितः सः रुजतीति रुक् अतिव्यथकः दाहो अस्मिन्नित्यन्वर्थसंज्ञां सूचयितुं विशेषणमाह-प्रततं विस्तीर्णं दाहं करोतीति तादृशः । मुनिवरेण सुश्रुतेन रुग्दाहकः स्मृतः उक्तः । प्रलपतीत्यत्र इतिशब्दो रुग्दाहक इत्यत्र संबध्यते तृषेत्यादिना पित्तोल्बणता, शिर इत्यादिना वातमध्यता च सूचिता । परिशेषात्कफहीनता । सक इत्यत्र अव्ययसर्वनाम्नामित्यकच् ॥ ८४ ॥

प्यासकी अधिकताको करनेवाले ज्वरके प्रचण्ड तापसे खिन्न शरीर और शिरके निरन्तर चलानेसे पीडितहै कण्ठमन्या ( गलेकी नाडी ) हनु ( ठोडी ) जिस मनुष्यकी ऐसा मनुष्य श्वास और मोहयुक्त होताहै, बडबडाताहै इस कुत्सित अत्यन्त पीडा तथा अत्यन्त दाह करनेवालेको मुनिवरोंने रुग्दाहनामका सन्निपात कहाहै ॥ ८४ ॥

उशीरजलचंदनांबुधरवर्मविश्वैरयं
षडंगगणउल्बणज्वरतृषार्त्तिदाहामयम् ॥
जयेज्जलसहासहायुगलगोक्षुरं चापरं
किरातजलकच्छुरानलदपर्पटांभोधरम् ॥ ८५ ॥

लिंगान्युक्तान्यौषधान्याह-उशीरमिति ॥ उशीरं वीरणमूलं, जलं वालकं, चंदनं हिमम्, अंबुधरो मुस्तं, वर्म कवचः, विश्वा शुंठी समाहारश्चार्थबहुत्वम् एभिरौषधैः षड्भिरयं षडंगो नाम गणः उल्बण उत्कृष्टं ज्वरतृषार्तिदाहामयं रोगं जयेत् । अन्यं वक्ति जलं वालकं, सहायुगलं मुद्गपर्णीमाषपर्ण्यौ, सहायुगलं शालपर्णीपृश्निपर्ण्यौ, गोक्षुरं द्वंद्वैक्यं रुग्दाहपीडां जयेत् । अपरं वक्ति-किरातो रामसेनः, जलं वालकं, कच्छुरा धन्वयासः, नलदं मांसी, पर्पटः कवचः, अंभोधरं मुस्तं, द्वंद्वैक्यम् अयमपि रुग्दाहं शमयति ॥ ८५ ॥

खस, नेत्रवाला, लाल चन्दन, नागरमोथा, पित्तपापडा, सोंठ यह पडङ्गनामका काथ बढे हुए ज्वर, प्यास, पीडा, दाहको जीतताहै । नेत्रवाला, मुद्गपर्णी, मापपर्णी, शालपर्णी, पृश्नपर्णी, गोखरू इनका काथ भी रुग्दाहकी पीडाको दूर करताहै । चिरायता, नेत्रवाला, जवासा, जटामांसी, पित्तपापडा, मोथा इनका भी काथ रुग्दाहसन्निपातको शमन करताहै ॥ ८५ ॥

नृपद्रुकटुकाभयाकवचहारहूराघनैः
शृतं जलमतिद्रुतं हरति दाहमत्यद्भुतम् ॥
मृगांकमलयोद्भवागुरुतुरुष्कतोयांबुद-
स्मरांकुशमुरानतैः समधुभिश्च धूपोत्तमः ॥ ८६ ॥

नृपद्रुरिति ॥ नृपद्रू राजवृक्षः, कटुका कट्वी, अभया हरीतकी, कवचः पर्पटः, हारहूरा द्राक्षा, मुस्तं घनम् । इतरेतरयोगे बहुत्वमेकत्वं च । एभिः शृतं जलं क्काथः अतिद्रुतं अतिशीघ्रम् अत्यद्भुतम् निर्मर्यादं दाहं रुग्दाहसन्निपातमिति यावत्, हरति जयेत् । धूपमाह-श्लोकार्द्धेन । मृगांकः कर्पूरः, मलयोद्भवं चंदनम्, अगुरु जोगकं, लोहबाणः तुरुष्कः, शिलारसः, तोयं बालकम्, अंबुदं मुस्तं, स्मरांकुशं सुगंधिनखं, मुरा मांसी, नतं तगरं समाहारे बहुत्वं मधुना सह धूपोत्तमः धूपेषु उत्तमः धूपोऽयं रुग्दाहं जयति ॥ ८६ ॥

अमलतासका गूदा, कुटकी, पित्तपापडा, हरड, मुनक्का, नागरमोथा इन औषधियोंका काथ बहुत जल्दी अत्यन्त बडे दाहको भी हरताहै । कपूर, श्वेतचन्दन, अगर, शिलाजीत, नेत्रवाला, नागरमोथा, सुगन्धिनामजटामांसी, तगर इन औषधियोंको सहत मिलाकर धूपदेना श्रेष्ठ है ॥ ८६ ॥

घनाभीरुब्राह्मीकलितरुबलानिंबजटिला-
जयाद्राक्षाराजद्रुमकुलकपाठीनशकलम् ॥



समं भूमीनिंबामलकदशमूलैरतिबलं
चलव्याधिव्रातं शमयति च रुग्दाहमतुलम् ॥ ८७ ॥

घनेति ॥ घनो मुस्ता, भीरुः शतमूली, ब्राह्मी मंडूकपर्णी, कलितरु बिभीतकं, बला वाट्यालकः, निंबो नेता, जटिला मांसी, जया पथ्या, द्राक्षा हारहूरा, राजद्रुमः शम्याकः, कुलकः पटोली, पाठीनशकलं कुटुकी, द्वंद्वैक्यं भूमीनिंबः किरातकः आमलको धात्री, दशमूलं पंचमूलद्वयं तैः समं सह एभिरौषधैः कृतः क्काथः अतिबलम् उत्कृष्टम्, अत एव अतुलं निरुपमं रुग्दाहं शमयति नाशयति । कीदृशं रुग्दाहं, चलव्याधिव्रातं चलस्य वातस्य व्याधीनां शिरश्चालनादीनां व्रातः समूहो यस्मिन् सः ॥ ८७ ॥

नागरमोथा, शतावरी, ब्राह्मी, बहेडा, खरेंटी, नीमकी छाल, जटामांसी, हरड, मुनक्का, अमलतास, परवलके पत्ते, कुटकी, चिरायता, आमला, दशमूल इनका काथ अत्यन्त बलवान् वायुकी व्याधिके समूह तथा बढेहुए रुग्दाह नाम सन्निपातको शमन करताहै ॥ ८७ ॥

एभिः प्रयोगैर्दोषेषु पक्केष्वपि न शाम्यति ॥
यदि दाहस्ततः कुर्यात्सुचिरं शिशिरं विधिम् ॥ ८८ ॥

एभिरिति ॥ एभिः प्रयोगैः षडंगगणादिभिः कृत्वा पक्केषु दोषेषु सत्सु यदि दाहो न शाम्यति न नश्यति ततस्तदा सुचिरं शीघ्रम् अतिवेलं शिशिरं शीतलविधिं प्रकारं कुर्यात, वैद्य इति शेषः ॥ ८८ ॥

दोषोंके परिपाक होनेपर भी षडङ्गगण आदिक प्रयोगोंसे यदि दाह शान्त न होवे तो शीघ्र शीतल प्रयोग करना चाहिये ॥ ८८ ॥

प्रशमयति दाहमचिराद्वन्धुरकर्कंधुपल्लवैर्लेपः ॥
फेनोथ विमलमलयजरसमिश्रोऽरिष्टजः सपदि ॥ ८९ ॥

शिशिरप्रकारद्वयमाह-प्रशमयतीति ॥ बंधुराणि विमलानि यानि कर्कंधुपल्लवानि बदरीपल्लवानि तैः कृतः पादहस्तयोस्तलेषु लेपोऽचिरात्तत्क्षणं दाहं प्रशमयति । द्वितीयः-विमलो मलयजरसः श्रीखंडजरसस्तेन भिश्रो युक्तो यः अरिष्टः रक्षाजीवस्तेभ्यो जातः । यद्वा । अरिष्टो निंबस्तस्माज्जातः फेनो दाहं प्रशमयति "अरिष्टः फेनिले निंबे लशुने काककंकयोः" इति विश्वः "बदरीपल्लवोत्थेन फेनेनारि-

छ्जेनवा ॥ लिप्तेऽंगे दाहरुङ्मोहांश्छर्दिस्तृष्णा च शाम्यति " इति वाग्भटात् ॥ ८९ ॥

बेरके साफ पत्ते पीसकर लेप करनेसे शीघ्र दाह शान्त होताहै । और मलयागिरि चन्दनको पीसकर नीमके पत्तोंके फेनमें मिलाकर लेप करनेसे शीघ्र दाह शान्त होताहै ॥ ८९ ॥

मलयजद्रवमिश्रितमुल्लसत्सितिमसत्सलिलेन सहस्रशः ॥
हृतमलं घृतमंगधृतं किलातरुणदारुणदाहमपोहति ॥९०॥

पाणिचरणतले घृतलेपमाह–मलयजेति ॥ मलयजद्रवमिश्रितं मलयजस्य श्रीखंडस्य यो द्रवो रसस्तेन मिश्रितं युक्तम्, उल्लसत् देदीप्यमानं सितिमा श्वेतत्वं यस्य तत्, सत्सलिलेन निर्मलोदकेन सहस्रशः सहस्रवारान् हृतं धौतं मलं यस्य तत्, घृतं गव्यम् अंगे घृतं सत्, अतरुणदारुणदाहम्–अतरुणं वृद्धम्–अत एव दारुणं दुःसहं दाहम् अपोहति नाशयति ॥ ९० ॥

चन्दनके रसमें मिलेहुए सफेद स्वच्छ जलसे एक हजार बार धोकर दूर कियाहै मल जिसका ऐसे गौके घृतका लेप बढेहुए अत्यन्त दुःसह दाहको नाश करताहै ॥ ९० ॥

सद्यः स्फुरत्सदरबिंदमरंदबिंदु-
संदोहसंगसुरभीकृतशुद्धनीराम् ॥
उद्यत्तरंगतरलीकृतहंसकांता-
माशु श्रयेत सरसीं तरुचारुतीराम् ॥ ९१ ॥

सद्य इति ॥ पुमान् सरसीं महत्सरः आश्रयेत तापापहरणायेति ज्ञातव्यम् । सद्यस्तत्काले स्फुरतां विकसतां सतामुत्तमानाम् अरविंदानां कमलानां मरंदस्य परागस्य बिंदवः कणास्तेषां संदोहः समूहस्तस्य संगः संयोगस्तेन सुरभीकृतं सुगंधीकृतं शुद्धं नीरं जलं यस्याः सा ताम्, उद्यद्भिर्निर्गच्छद्भिस्तरंगैस्तरलीकृताः पृथक्कृताः हंसास्तैः कांतां रुचिराम् । यद्वा । उद्यतो ये तरंगास्तैस्तरलीकृताः हंसस्य कांताः यस्यां सा । तरवः चारवः रम्याः तीरे यस्यां सा तां मरंदोमकरंदवदिति ॥ ९१ ॥

तत्काल खिलेहुए कमलोंके रसकी बिन्दुओंके समूहके संगसे सुगन्धि जलवाले तथा उठीहुई तरङ्गोंसे चञ्चल हंसोंकी कामिनी हंसिनी जिसमें, वृक्ष हैं तटपर जिसके ऐसे सरोवर ( ताळाब ) पर दाहको दूरकरनेके लिये निवास करे ॥ ९१ ॥

वरमरकतपद्मरागशुद्ध-
स्फटिककृताखिलशिल्पसन्निवेशाम् ॥



नवविकसितनीलशोणशुभ्रो-
त्पलललितार्णसमाश्रयेत वापीम् ॥ ९२ ॥

वरेति ॥ वरा श्रेष्ठाः ये मरकता नीलमणयः, पद्मरागा रक्ताः, शुद्धस्फटिकाः सूर्यकांतास्तैः कृतः अखिलः संपूर्णः शिल्पस्य संनिवेशस्तत्प्रकारो रचनाविशेषो यस्यास्तां, नवानि विकसितानि प्रफुल्लानि, नीलानि शोणितानि रक्तानि, शुभ्राण्युज्ज्वलानि, उत्पलानि कमलानि तैर्ललितानि रम्याणि अर्णांसि तोयानि यस्यां सा ताम्, एवं विधां वापीं दीर्घिकाम् आश्रयेत । तत्र स्थितिं कुर्यात् ॥ ९२ ॥

श्रेष्ठ मरकतमणि, पद्मरागमणि तथा स्फटिकमणियोंसे जिसकी सम्पूर्ण शिल्पकी रचना बनायीगयीहो और नवीन खिलेहुए नीले, लाल तथा श्वेत कमलोंसे जिसका जल शोभायमानहो ऐसी वापी ( बावडी ) पर प्रचण्ड दाह दूरकरनेके लिये निवास करे ॥ ९२ ॥

परिरचितरिरंसाशंसियातानुयातै-
रविरतमुपहंसि प्रोज्ज्वला राजहंसैः ॥
तटरुहतरुखंडस्रस्तपुष्पावतंसा.
प्रशमयति निकामं दीर्घिका दाहमाशु ॥ ९३ ॥

पुनर्दीर्घिकां वर्णयति–परिरचितेति ॥ ईदृशी दीर्घिका आशु शीघ्रं निकामम् अतिशयेन दाहं प्रशमयति । कीदृशी, राजहंसैः श्वेतहंसैः प्रोज्ज्वला । कीदृशैर्हंसैः उपहंसि हंस्याः समीपे परितो रचिता निष्पादिता रिरंसा रंतुमिच्छा तस्या आशंसीनि सूचकानि यातानुयातानि गतागतानि यैस्तैः तटे रुहंति तटरुहास्तेषां तरूणां वृक्षाणां खंडाः समूहास्तेभ्यः स्रस्तानि गलितानि पुष्पाण्येव अवतंस आभरणविशेषो यस्याः सा एतादृशी तापं नाशयति ॥ ९३ ॥

वापीका वर्णन–हंसिनीके समीपमें रचीहुई रमणकरनेकी इच्छाको कहनेवाले, आने तथा जानेवाले राजहंसोंसे शोभायमान और किनारेपर उगनेवाले वृक्षोंके समूहोंसे गिरेहुए फूल ही हैं आभूषण जिसके ऐसी बावडीका निवास शीघ्रही दाहको दूर करताहै ॥ ९३ ॥

परिलसदवदुःसहदाहरुग्विधुरितस्फुरितज्वरवेदनः ॥
सुहरिचंदनलिप्ततनुः स्रजः सरसिजव्रजसुग्रथिता भजेत् ॥९४॥

कुसमधारणं समर्थयति-परिलसेति ॥ परितो लसन् ज्वलन् यो दवो दावाग्निस्तद्वद्दुःसहस्य दाहस्य या रुक् पीडा तया विधुरितो विह्वलीकृतः पुमान् स्फुरिता आविर्भूता ज्वरस्य वेदना यस्य सः सुहरिचंदनेन सुष्ठु मलयजेन लिप्ता तनुः शरीरं यस्य सः, सरसिजानां कमलानां व्रजैः ग्रथिताः गुंफिताः स्रजो माला भजेत धारयेत । कंठादिष्विति शेषः । कमलादिपुष्पाणां धारणमुक्तम् ॥ ९४ ॥

चारों तरफसे जलतीहुई बनकी अग्निके सदृश दुःसह दाहकी पीडासे दुःखित और उत्पन्नहुई ज्वरकी पीडासे पीडित मनुष्य मलयागिरि चन्दनसे तमाम शरीरपर लेप करके कमलोंके समूहकी सुन्दर गुथीहुई मालाओंको धारण करै ॥ ९४ ॥

लसत्कुसुमकाननद्रुममनोरमक्ष्मातले
कनत्कनककांतिभिः कदलिकाप्रकांडैः कृतम् ॥
विकासिकमलावलीविहिततल्पमंतःपटु-
प्रयुक्तमृदुशीकरं विपुलकायमानं भजेत् ॥ ९५ ॥

लसदिति ॥ पुमान् विपुलं च तत्कायमानं कुंजगृहं भजेत । लसत्कुसुमाश्च ते काननद्रुमाश्च तैः मनोरमं यत क्ष्मातलं क्ष्मातले कनंती दीप्यमाना कनकवत कांतिर्येषां तैः कदलिकाप्रकांडैः कदलीस्तंभैः कृतं निर्मितं विकाशिकमलावलीविहिततल्पं कमलपत्रैः विहिता रचिता तल्पा शय्या यस्मिन् तत । अंतः गृहमध्ये पटु साधु यथातथा प्रयुक्ता मृदवः शीकराः जलबिंदवो यस्मिन् ईदृशं कुंजगृहं सेवेत । कामव्यथयाऽपि कदाचित्कस्यापि रुग्दाहो भवेदित्युक्तं कामबाणदुःसहा मोहमददाहादिकराः ॥ ९५ ॥

खिलेहुए पुष्पोंवाले वृक्षोंसे मनोरम पृथिवीपर सुवर्णकी कान्तिके समान देदीप्यमान केलाओंके स्तम्भोंसे बनायाहुआ और कमलके फूलोंकी पांखुरियोंसे सजायाहुआ जिसमें पलंग हो और घरके मध्यभागमें सुडौल लगाहुआ, कोमल जलकी बूँदोंको देनेवाला फुआरा जिसमें बनाहो ऐसे कुंजघरमें अत्यन्त दाहसे दुःखित मनुष्य वास करै ॥ ९५ ॥

स्ववदनस्तनमध्यमनिर्ज्जित-
द्विजपतिद्विपकुंभमृगद्विषः ॥
युवतयः कथिता दवथुव्यथा-
प्रशमनाय बुधैः परमौषधम् ॥ ९६ ॥

तत्रौषधमाह-स्ववदनेति ॥ बुधैर्विद्वद्भिः युवतयस्तरुण्यः दवथुर्दाहस्तस्य व्यथा पीडा तस्याः प्रशमनाय परमौषधं कथिताः। किंभूताः स्ववदनस्तनमध्यमैर्निर्जिताः द्विजपत्याद्यो याभिस्ताः। द्विजपतिश्चंद्रः मुखेन निर्जितः। स्तनाभ्यां द्विपकुंभौ निर्जितौ। मध्यमेन कटिभागेन मृगद्विट् सिंहः निर्जितः ॥ ९६ ॥

अपने मुखारविन्दसे चन्द्रमाको जीतनेवाली, स्तनोंसे हाथियोंके गंडस्थलोंको जीतनेवाली, और कटि ( कमर ) से सिंहको जीतनेवाली, तरुण स्त्रियें दाहकी पीडाको शमन करनेके लिये पण्डितोंने उत्तम औषधी कहीहै। अर्थात् ऐसी स्त्रियोंसे दाह शांत होजाताहै ॥ ९६ ॥

कृतविमलजलप्लुतिरतिपृथुल-
स्तनयुगनिहितोत्तमशिशिररसा ॥
ध्रुवमुरसि धृता क्षणमपि दयिता
ज्वरभवदवथुं शमयति सहसा ॥ ९७ ॥

संभोगनिषेधार्थमाह-कृतेति ॥ ईदृशी दयिता उरसि क्षणमपि धृता हृदये क्षणं विहिता सती सहसा शीघ्रं ज्वरभवश्चासौ दवथुश्च दाहस्तं शमयति। कीदृशी कृता विमलजले निर्मलोदके प्लुतिः स्नानं यया सा। पुनः कीदृशी-अति अत्यंतं पृथुलौ च तौ स्तनौ च तयोः युगं युगलं तत्र निहितः आरोपितः उत्तमशिशिररसो यक्षकर्दमादिर्यया सा दयिताया आलिंगनं दाहहरं न तु संभोग इति भावः ॥ ९७ ॥

पूर्वोक्तगुणयुक्त स्वच्छ जलसे स्नान करनेवाली, और बडे २ दोनों स्तनोंके बीचमें उत्तम मलयागिरि चन्दन रखनेवाली स्त्री क्षणमात्र भी हृदयपर धारण कीहुई निश्चय ज्वरसे उत्पन्नहुए दाहको शीघ्र ही शान्त करतीहै। ऐसी स्त्रीका आलिंगन ही दाह हरनेवाला है संभोग दाहहरनेवाला नहीं है ॥ ९७ ॥

कांताबाहुलताश्लेषपद्मस्रक्चंदनादिभिः ॥
शांतदाहः सदाहर्षपूर्णः स्यात्पथ्यभुङ् नरः ॥ ९८ ॥

कांतेति ॥ कांतायाः बाहुलते ताभ्यामाश्लेषश्च पद्मस्रजश्च पद्ममाला चंदनानि तैः। आदिपदेनान्येऽपि शिशिरादयो गृह्यंते पुमान् शांतदाहो भवति हर्षपूर्णो भवति चेत्सदा पथ्यभुङ्नरो भवति नो चेद्विपरीत्यम् ॥ ९८ ॥

सुन्दर स्त्रीकी बाहुरूपी लताओंका आलिङ्गन, कमलके फूलोंकी माला, चन्दन, कर्पूरादि-कोंसे जिसका दाह शान्त होगयाहो ऐसा पुरुष पथ्यसे रहनेवाला हमेशा हर्षपूर्ण रहताहै ॥९८॥

इति रुग्दाहचिकित्सा ।

---

चित्तभ्रमसन्निपातके लक्षण ।

**हसत्यसत्पश्यति मोहतापभ्रमापदार्त्तश्च नरीनृतीति ॥**
**चिराय गायत्यपि येन जंतुश्चित्तभ्रमाख्यं ज्वरमेतमाहुः ॥९९॥**

अतः परं चित्तभ्रमाख्यमाह–हसतीति ॥ पुमान् हसति, असत अविद्यमानं पश्यति । मोहो वैकल्यं, तापः संतापः, भ्रमश्चक्रारूढस्येव ज्ञानम्, आपद्वैकल्यादिपीडास्ताभिः आर्त्तः सन् नरीनृत्यति येन चित्त-भ्रमेण ज्वरेण चिराय चिरकालं जंतुः प्राणी गायति अस्थान एव तं ज्वरं बुधा चित्तभ्रमाख्यं चित्तस्य भ्रमोऽस्मिन्निति योगात्तदाख्यं चित्त-भ्रमनामानम् आहुः कथयंति । अत्र हसतीत्यादिना वातोल्बणता तापभ्रमेत्यादिना पित्तमध्यता सूच्यते, परिशेषात्कफहीनता च ॥९९॥

जो मनुष्य व्यर्थ हँसताहो, विद्यमान वस्तुको देखता नहो, विकलता सन्ताप भ्रम आदि पीडाओंसे पीडित हो, नाचताहो बहुत देर तक गाताहो ऐसे मनुष्यको चित्तभ्रम नाम सन्निपात-ज्वर कहतेहैं ॥ ९९ ॥

चिकित्सा ।

**कणोषणोग्रालवणोत्तमानि करंजबीजक्षणदामलानि ॥**
**पथ्याक्षसिद्धार्थकहिंगुशुंठीयुतानि बस्तांबुविमिश्रितानि १००।**
**पिष्ट्वा गुटीयं नयने विधेया प्रचेतनेति प्रथितान्वितार्था ॥**
**चित्तभ्रमापस्मृतिभूतदोषशिरोक्षिरोगभ्रमनाशहेतुः ॥ १ ॥**

आदौ चित्तभ्रमापकरणायांजनगुटिकामाह–कणेति ॥ कणा पिप्पली, ऊषणं मरिचं, उग्रा वचा, लवणोत्तमानि पंचलवणानि, करंजबीजं प्रसिद्धं, क्षणदा हरिद्रा, आमलम् आमलकं, पथ्या हरीतकी, अक्षो विभीतकम्, सिद्धार्थकः सर्षपः, हिंगु रामठं, शुंठी विश्वा एतानि युतानि एकीकृतानि बस्तांबुना अजामूत्रेण विमिश्रितानि प्लुतानि ॥ १०० ॥ पिष्ट्वेति ॥ एतानि पिष्ट्वा संचूर्ण्य गुटिकाः कार्याः प्रचेतनाख्या प्रक-



र्षेण चेतयति चेतनां करोति सा प्रचेतना इति । चितीसंज्ञाने धातुः । सा गुटी नयने विधेया कर्त्तव्या । प्रथितः ख्यातः अन्वितार्थः धातु-युक्तः अर्थो यस्याः सा । कीदृशी–चित्तभ्रमः चेतनानाशः, अपस्मृतिः अपस्मारः, भूतदोषः उन्मादादिः, शिरोरोगः अक्षिरोगः, भ्रमो वात-भ्रमः तेषां नाशहेतुः ॥ १ ॥

पीपर, काली मिरच, बच, पांचों नोन, कंजाकी मींग, हलदी, आमरा, हरडका बक्कल, बहेडा, सरसों, हींग, सोंठ ये औषधियें बकरीके मूत्रमें पीसकर गोली बनाईहुई और नेत्रमें अंजन कीहुई चित्तभ्रम, अपस्मार, भूतदोष ( उन्मादादि ) शिरके रोग, नेत्रके रोग, भ्रम इतने रोगोंको नाश करतीहै ठीक २ अपने अर्थको करनेसे यह गुटिका लोकमें प्रचेतना नामसे प्रसिद्ध है ॥ १०० ॥ १०१ ॥

**कुंभोद्भवतरोरंभोगुडविश्वाकणान्वितम् ॥**
**निहितं नसि नूनं स्याच्चित्तभ्रमविनाशनम् ॥ २ ॥**

नस्यमाह–कुंभोद्भवेति ॥ कुंभोद्भवतरोः अगस्त्यवृक्षस्य अंभः तस्य पल्लवांतः गुडश्च विश्वा च कणा च तैरन्वितं युक्तम् एवंविधमुदकं नसि नासिकायां निहितम् आरोपितं सत् चित्तभ्रमविनाशनं भवति । एत-न्नस्यमुक्तम् ॥ २ ॥

अगस्त वृक्षके पत्तेके रसमें गुड सोंठ पीपर मिलाकर सूंघनेसे चित्तभ्रम दूर होताहै ॥ २ ॥

**मुरामूर्द्धजमेघाह्वमधूकमलयोद्भवैः ॥**
**मरुत्तरुमधून्मिश्रैः पुरपाणिजपांशुभिः ॥ ३ ॥**

धूपमाह–मुरेति ॥ मुरा गंधकुटी, करपूरकाचरीतिभाषा, मांसी-त्यन्ये । मूर्द्धजं वालकं, मेघाह्वः मोथा, मधूकं मधूकपुष्पं, मलयोद्भवं चंदनम्, मरुत्तरुर्देवदारु, मधु सारघं तेन उन्मिश्रितैः एकीकृतैः पुरो गुग्गुलः, पाणिजं सुगंधिनखं पांशुः पर्पटः एतैः ॥ ३ ॥

कपूर, कचरी, नेत्रवाला, नागरमोथा, चन्दन, देवदारु, सहत, गूगल, पित्तपापडा, अगर, खस, छोटी इलायची इन औषधियोंकी बनाईहुई ॥ ३ ॥

**लोहलामज्जकैलाभिर्धूपश्चित्तभ्रमापहः ॥**
**ग्रहदोषहरः श्रीदः सौभाग्यकरणः परम् ॥ ४ ॥**

लोहेति ॥ लोहं अगुरुलामज्जकम् उशीरम् एला सूक्ष्मैलाः, एतैः युक्तैः कृतो धूपः ग्रहश्च दोषश्च तौ हरति । श्रीदः श्रियं लक्ष्मीं शोभां वा ददाति परम् अतिशयेन सौभाग्यं करोति ॥ ४ ॥

धूप, चित्तभ्रम ग्रहोंकी पीडा तथा कुपित वात, पित्त, कफ, इन दोषोंको दूर करतीहै लक्ष्मी अथवा शोभाको देतीहै और अत्यन्त सौभाग्यको करतीहै ॥ ४ ॥

मृद्वीकामरदारुमत्स्यशकलामुस्तामलक्योऽमृता
पथ्यारेवतरामसेनकरजोराजीफलाभिर्युताः ॥
हन्युश्चित्तरुजोऽथ दर्दुरदलाद्राक्षापटोलीपयः-
पथ्यापर्पटराजवृक्षकटुकाशंबूकपुष्प्यः शृताः ॥ ५ ॥

अथ क्वाथमाह–मृद्वीकेति ॥ मृद्वीका द्राक्षा, आरेवतो राजवृक्षः, रामसेनको भूनिंबः, रजः पर्पटः, राजीफला पोली, एताभिः औषधीभिर्युताः शृताः एताः ओषधयः क्वाथीकृताः चित्तरुजः चित्तभ्रमं हन्युः। अपरक्वाथमाह–दर्दुरदलादय ओषधयः शृताः क्वाथीकृताः सत्यश्चित्तरुजश्चित्तभ्रमं हन्युः। दर्दुरदला ब्राह्मी, द्राक्षा गोस्तनी, पटोली पटोलपत्रं, पयो बालकं, पथ्या हरीतकी, राजवृक्ष आरग्वधः, कटुका कटुी, शंबूकपुष्पी शंखपुष्पी ॥ ५ ॥

मुनक्का, देवदारु, कुटकी, मोथा, आंवला, गिलोय, हरड, अमलतास, हींग, कंजाकी मींग, पोली इन औषधियोंका क्वाथ चित्तभ्रमको दूर करताहै । द्वितीय क्वाथ–ब्राह्मी, मुनक्का, परवलके पत्ते, नेत्रवाला, हरड, अमलतास, कुटकी, शंखपुष्पी, इनका क्वाथ चित्तभ्रमको दूर करता है ॥ १०५ ॥

कर्णकसन्निपातके लक्षण ।

श्वयथुरतिबहुव्यथस्त्रिदोषज्वरविरतौ भवति श्रुतेरधो यः ॥
प्रलपनमदमोहकंपकण्ठग्रहबधिरत्वकरः स कर्णकाख्यः ॥६॥

कर्णकमाह–श्वयथुरिति ॥ त्रिदोषज्वरविरतौ त्रिदोषज्वरनाशे विरतेरिति पाठे हेतौ पंचमी, श्रुतेर्जातावेकवचनं कर्णाभ्यामधः अतिबहुव्यथः अति अत्यतं बह्वीः महती व्यथा यस्यासौ यः श्वयथुः शोथो भवति स शोथः प्रलपनादीनां करः उत्पादकः। प्रलपनं मिथ्याभाषणं मदः, मोहो वैचित्यं, कंपो देहचलनं कंठग्रहः, बधिरत्वं कर्णव्यापारराहित्यं, स रोगः कर्णकाख्यः कर्णकाभिधानः कंठग्रहोऽतिश्वासकफप्रसेकादीनां कलिकोक्तानामुपलक्षणम्, एतेन कफोल्बणता प्रलपनेत्यादिना च वातमध्यता सूचिता परिशेषाद्धीनपित्तता च ॥ ६ ॥



सन्निपातज्वरके शान्त होनेपर कानोंके नीचे अत्यन्त अधिक पीडा करनेवाली सूजन होतीहै और वह सूजन प्रलाप मोह कम्प कण्ठका रोकना और बहिरेपनको करतीहै, इसको कर्णक सन्निपात कहतेहैं ॥ ६ ॥

ध्रूमश्चिकित्सामुचितोऽस्य धूमः प्रहर्षदः स्यात्कवलग्रहश्च ॥
नस्यं सुखं संजनयत्यवश्यं लेपस्तु सर्वेषु घृतावलेपः ॥ ७ ॥

ध्रूम इति ॥ वयं मुख्यं चिकित्साचतुष्टयं ध्रूमः। अस्य कर्णकाख्यस्य शोफस्य धूम उचितो योग्यस्तीक्ष्णद्रव्यकृतः पेय इति यावत् । कीदृशो धूमः प्रहर्षदः आरोग्यप्रदः। च पुनः कवलग्रहो गंडूषः प्रहर्षदः स्यात् स च कफप्राये इत्यादिनोक्तः। तथोचितं नस्यम् अवश्यं निःसंदेहं सुखं संजनयति । लेपस्तु सर्वेषु धूमादिषु धृतोऽवलेपोऽहंकारो येन स तथा स एव सर्वेषु श्रेष्ठ इति भावः ॥ ७ ॥

अब इस कर्णक सन्निपातकी चिकित्सा चार प्रकारसे कहतेहैं–तीक्ष्ण औषधियोंका आरोग्य देनेवाला धूमपान करना चाहिये । शोफनाशक औषधियोंके ग्रास रखने तथा कुल्ले करना चाहिये । तथा शोफनाशक औषधियोंका नस्य भी निश्चय सुखकारक है । और लेप तो सम्पूर्ण धूम आदिकोंमें श्रेष्ठतम है ॥ ७ ॥

प्रलेपस्तमस्तं नयत्यल्पमेकः
समुद्रिक्तशोफं तु रक्तावसेकः ॥
विपक्वं च शस्त्रक्रिया पूयजित्सा
व्रणत्वं गतं च द्रुतं तच्चिकित्सा ॥ ८ ॥

प्रलेपेति ॥ एको मुख्यः प्रलेपः अल्पं किंचिदुपद्रुतं तं कर्णकम् अस्तं नाशं नयतीति सर्वत्र संबध्यते । रक्तस्यावसेको मोक्षो रक्तावसेकः समुद्रिक्तोऽतिवृद्धः शोफो यस्य तं कर्णकम् अस्तं नयति शस्त्रक्रिया भेदनपाटनादिका च विपक्वं संजातपूयं कर्णकम् अस्तं नयति। तत्र हेतुः सा शस्त्रक्रिया पूयजित् पक्वदोषजिद्भवतीति व्रणत्वं गतं व्रणतां प्राप्तं द्रुतं विस्तरतां प्राप्तम्। तेषां व्रणानां चिकित्सा कर्तव्या तां वक्ष्ये ॥ ८ ॥

एक लेप ही थोडे उपद्रवयुक्त शोफको नाश करताहै और रक्तका निकलना अत्यन्त बढीहुई शोफको नाश करता है । और शस्त्रक्रिया छेदन भेदन पाटनादिकोंसे पकेहुए शोफको शान्त करतीहै, क्योंकि छेदनादि शस्त्रक्रिया पूय ( राध ) को दूर करनेवाली होतीहै और वही सूजन व्रण ( घाव ) भावको प्राप्त होजावे तो व्रणकी चिकित्सा करना चाहिये ॥ ८ ॥

निशाविशालामयमाणिमंथदार्विङ्गुदीमूलकृतः प्रलेपः ॥
प्रभाकरक्षीरयुतः प्रभावाद्व्यस्तः समस्तोऽप्यथ कर्णकघ्नः ॥ ९ ॥

धूपादिचतुर्णां चिकित्सानां मध्ये अत्युत्कटत्वादादौ लेपं वक्ति, कोऽसौ प्रलेप इत्याकांक्षायामाह-निशेति ॥ प्रभाकरो भानुः अर्कस्तस्य क्षीरेण युतः निशादीनां कृतः प्रलेपः व्यस्तः समस्तोऽपि कर्णकघ्नो भवति। ननु व्यस्तस्य कथं कर्णकहरत्वमित्यत्राह प्रभावादिति । प्रभावात् माहात्म्यात्, निशा हरिद्रा, विशाला इन्द्रवारुणी, आमयः कुष्ठं, माणिमंथं सैन्धवं, दार्वी दारुहलदीति प्रसिद्धा इंगुदीमूलं तापसतरुमूलम् ॥ ९ ॥

हलदी, इन्द्रायणका फल अथवा जड, कूट, सेंधानोंन, देवदारु, इंगुदीकी जड इन औषधियोंको पीसकर आकके दूधमें मिलाकर लेप करनेसे औषधीके प्रभावसे व्यस्त तथा समस्त लक्षण युक्त कर्णक सन्निपात दूर होजाताहै ॥ ९ ॥

हृद्वात्रिकाहर्पतिमूलसिंधुपलंकषाः कर्णकमाशु हन्युः ॥
लेपेन रोहीतकपीलुसिंधुपोत्रीन्द्रवल्ली कटुतुंबिका वा ॥११०॥

अस्मिन् श्लोके लेपद्वयं वक्ति-हृद्वात्रिकेति ॥ हृद्वात्रिका ह्यावहि इति महाराष्ट्रभाषायां, चोख इति गुर्जरा, हरिताल इति केचित् । अहर्पतिमूलम्-अर्कमूलं, सिंधु सैधवं, पलंकषा गुग्गुलु एता औषधयो लेपेन कृत्वा कर्णकं हन्युः । आशु शीघ्रम् अपरं रोहीतकं प्लीहशत्रुः, रोहीडा इति प्रसिद्धः पीलुर्गुडफलः, सिंधु सैधवं, पौत्री वाराहीकंदः, इंद्रवल्ली इंद्रवारुणी, कटुतुंबिकाः कटुतुंबी, एतासां लेपेन कर्णकं नश्यति ॥ ११० ॥

हृद्वात्रिकाको ( ह्यावहि ) महाराष्ट्र भाषामें कहतेहैं, चोख गुर्जरभाषामें कहतेहैं कोई कोई हरतालको कहतेहैं । अहर्पति ( आककी जड ) सेंधानोन गूगल इन औषधियोंका लेप कर्णकको शीघ्र दूर करताहै । रोहिडा, पीलु, सैन्धानोन, वाराहीकन्द, इन्द्रायणकी जड कडवीतोम्बीका गूदा इन औषधियोंका लेप कर्णक सन्निपातको दूर करताहै ॥ ११० ॥

तुत्थालसर्षपशिलानवसादगंध-
कासीसकुष्ठपटुहंसपदीकरंजाः ॥
लेपात्पलंकषयुताश्च सयावशूका-
सस्वर्जिकाः सपदिकर्णकवेदनघ्नाः ॥ ११ ॥



लेपं वक्ति-तुत्थालेति ॥ तुत्थं मयूरग्रीवं, आलं हरितालं, सर्षपशिलाः मनःशिला, नवसादरो, गंधकः काशीसं हीराकसीसं कुष्ठं गदं, पटु सैन्धवं, हंसपदी त्रिपादी कीटभारकेति यावत् । करंजः करंजपत्रं मूलं वा । एताः ओषधयः पलंकषयुताः गुग्गुलुना युताः लेपात्सपदि शीघ्रं कर्णकवेदनघ्नाः स्युः । किंभूता एताः सयावशूका यवक्षारेण सहिताः । पुनः किंभूताः स्वर्जिकाक्षारेण सहिताः ॥ ११ ॥

नीलाथोथा, हरताल, सरसों, मनसिल, नौसादर, गंधक, हीराकसीस, कूट, सेंधानौन, हंसराज, कंजाके पत्ते, कंजाकी जड, गूगल, जवाखार, सज्जीखार इन औषधियोंके लेप करनेसे कर्णक सन्निपातकी वेदना दूर होजातीहै ॥ ११ ॥

कट्फलकुलत्थकुण्डनसुपवीशुण्ठीभिरर्तिहा लेपः ॥
अथ लवणसोमवल्कलगैरिकशटिनागरैरुदितः ॥ १२ ॥

कट्फलेति ॥ कट्फलः कुलत्थकंडनं तुषः सुषवी वाप्पिका कलौंजीति भाषा, शतपुष्पाभेद इति कश्चित् । शुंठी विश्वा, एताभिर्लेपोऽर्तिहा अर्तिं कर्णकपीडां हन्ति । अपरः-लवणं सैंधवं, सोमवल्कलः कट्फलः, गैरिकः गेरू, शटी कर्चूरः, नागरं शुंठी ताभिर्लेपोऽर्तिहा उदितः कथितः ॥ १२ ॥

कायफल, कुलथीके तुस, कलौंजी, सोंठ इन औषधियोंका लेप कर्णककी पीडाको दूर करताहै । सेंधानोंन, कायफल, गेरू, कचूर, सोंठ इन औषधियोंका लेप कर्णककी पीडाको दूर करताहै ॥ १२ ॥

जंबीरनीरमर्दितमुग्राविषतिन्दुकामकाशीसम् ॥
आसालुकतुत्थयुतं कर्णककरिकुम्भकेसरिप्रथितम् ॥ १३ ॥

जंबीरेति ॥ आसालुकः चंदशूरः, तुत्थं थूथस्ताभ्यां युतम्, उग्रा वचा, विषतिंदुकः कुचिला, आमं कुष्ठमिदमौषधं जंबीरनीरेण मर्दितं सत् कर्णक एव करिकुंभस्तस्य केसरी विदारकः सिंहः केसरीति प्रथितं पृथा यस्य तादृशम् ॥ १३ ॥

वच, कुचिला, कूट, हीराकसीस, आसालुक ( हरताल ) नीलाथोथा इन औषधियोंका जँभीरीके रसमें पीसाहुआ लेप कर्णकरूपी हाथीको विदीर्ण करनेवाला सिंहनामसे प्रसिद्धहै ॥ १३ ॥

मदनफलमातुलंगीमूलामरदारुनागरानलयुक् ॥
अपहरति गंधमूलां प्रलेपतः कर्णमूलानि ॥ १४ ॥

मदनफलेति ॥ मदनफलं पिंडीतकं मातुलुंगीमूलम्, अमरुदारु देवदारु, नागरं शुंठी, अनलो भल्लातकः, वा चित्रकः, तेन युक् युक्ता गंधमूला रास्ना, शटी वा एतेषामौषधानां प्रलेपतः कर्णमूलानि अपहरति वैद्यः ॥ १४ ॥

मैनफल, बिजौरेकी जड, देवदारु, सोंठ, चित्रक, रासना, कचूर इन औषधियोंके लेपसे कर्णकसन्निपात नष्ट होताहै ॥ १४ ॥

गुडदहनगदनिकुम्भापुष्करकाशीसदिनकरक्षीरैः ॥
रविकिरणैरिव तुहिनं विलीयते कर्णकग्रथनम् ॥ १५ ॥

गुडेति ॥ गुडः प्रसिद्धः, दहनः चित्रकः, गदः कुष्ठं, निकुंभा दंती, पुष्करं पुष्करमूलं, कासीसं हीराकसीसः, दिनकरक्षीरम् अर्कदुग्धमेभिरौषधैः कर्णकग्रंथनं विलीयते । अत्र दृष्टांतः रविकिरणैस्तुहिनमिव ॥ १५ ॥

गुड, चित्रक, कूट जमालगोटाकी जड, पुहकरमूल, हीराकसीस, आकका दूध इन औषधियोंके लेपसे कर्णक सन्निपात दूर होजाताहै । जैसे सूर्यकी किरणोंसे ओस दूर होतीहै उसी तरह इस लेपसे कर्णक नष्ट होजाताहै ॥ १५ ॥

अशिशिरजलपरिमृदितं मरिचकणालवणजं रजस्त्वरितम् ॥
नस्यविधिसेवितं ननु कर्णकरुग्नाशकृद्गदितम् ॥ १६ ॥

अशिशिरेति ॥ मरिचमूषणं, कणा कृष्णा, लवणमत्र सैंधवम् । " लवणं सैन्धवं ज्ञेयं चंदनं रक्तचंदनम् " इति परिभाषायां तेभ्यः जातं तज्जं रजश्चूर्णम् अशिशिरजलेनोष्णोदकेन परिमृदितं मर्दितं सत् त्वरितं शीघ्रं नस्यविधिसेवितं नावनेन नासिकायां बिंदु रोपितं सत् कर्णकस्य रुक् पीडा तस्याः नाशकृत् नाशं करोतीति नाशकृत गदितं प्रोक्तम् ॥ १६ ॥

कालीमिरच, पीपर, सेंधानोन इनका चूर्ण गरम जलसे पियाहुआ नस्यविधिसे सेवन कियाहुआ अर्थात् नासिकामें इसकी बिन्दु डालनेसे कर्णक सन्निपातकी पीडाको शीघ्र नष्ट करता है ॥ १६ ॥

भार्गीजयापुष्करकंटकारीकटुत्रिकोग्राघनकुण्डलीभिः ॥
कुलीरशृंगीकटुकारसाभिः कृतः कषायः किल कर्णकघ्नः ॥ १७ ॥



लेपनस्य विधिमुक्त्वा क्वाथमाह-भार्गीति ॥ भार्गी ब्राह्मणयष्टिका, जया हरीतकी, पुष्करं पुष्करमूलं, कंटकारी व्याघ्री, कटुत्रिकं व्योषं, उग्रा वचा, घनो मुस्तं, कुंडली गुडूची, कुलीरशृंगी कर्कटशृंगी, कटुका कटुकी, रसा रास्ना, एताभिः कृतः क्वाथः कर्णकं हंतीति कर्णकघ्नो भवति । किलेति निश्चयेन ॥ १७ ॥

भारंगी, हरड, पुहकरमूल, कटेरी, सोंठ, मिरच, पीपर, वच, मोथा, गिलोय, काकडासींगी, कुटकी, रासना इन औषधियोंका क्वाथ कर्णक सन्निपातका नाश करताहै ॥ १७ ॥

दशमूलमत्स्यशकलाचपलात्रिफलामहौषधकिरातयुतम् ॥
मरिचं परिक्कथितमाशु बलादपहंति कर्णकरुजः सकलाः ॥ १८ ॥

द्वितीयक्वाथमाह-दशमूलमिति ॥ दशमूलं पंचमूलीद्वयं, मत्स्यशकला कटुकी, चपला पिप्पली, त्रिफला फलत्रयं, महौषधं शुंठी, किरातो भूनिंबः, तेन युतं मरिचमुष्णम्, एतत्परिक्कथितं बलात् हठात्, आशु शीघ्रं, सकलाः समस्ताः, कर्णकरुजः पीडा अपहंति ॥ १८ ॥

दशमूल, कुटकी, पीपर, त्रिफला, सोंठ, चिरायता, मिरिच, इन औषधियोंका क्वाथ हठसे कर्णकसन्निपातकी सम्पूर्ण पीडाको नाश करताहै ॥ १८ ॥

इति कर्णकप्रतीकार ।

---

कण्ठकुब्जके लक्षण ।

हनुस्तंभदाहारुचिश्वासकंप-
प्रलापाभितापव्यथामोहसंपत् ॥
शिरोरुग्ज्वरो येन रोधो गलस्य
ध्रुवं जायते कंठकुब्जः स्मृतः सः ॥ १९ ॥

कर्णकमुक्त्वा कंठकुब्जमाह-हनुस्तंभेति ॥ हनुस्तंभो वर्णभाषणादिक्रियाशून्यता, दाहोऽत्राभ्यंतरः, अरुचिः, श्वासः, कंपः, प्रलापः, मिथ्याभाषणम्, अभितापो मनस्तापः, व्यथा तोदभेदादिवातपीडा, मोहो विचाराशक्तिः, हनुस्तंभादीनां संपत् अभिवृद्धिः शिरसि पीडा ज्वरः शारीरो भवति । येन ज्वरेण गलस्य कंठस्य रोधो जायते ध्रुवम् । गलस्य रोध इत्यनेन कफमध्यतोक्ता न चात्र दाहपाठात कुतो न पित्तम-

ध्यतेति शंक्यम् एतेन वातोल्बणता वातकफोचितस्यैव प्रतीकारस्य वक्ष्यमाणत्वाद्दाहस्य तु पित्तहीनवृद्ध्यापि संभवात् । स कण्ठकुब्जः स्मृतः ॥ १९ ॥

हनुस्तम्भ ( बोलने आदि क्रियाओंसे रहित ) अभ्यन्तर दाह, अरुचि, श्वास, कम्प, बड-बडाना, मानसिक ताप, तोद, ( सूचीवत् पीडा ) भेदादि वायुकी पीडा विचारशक्तिहीन शिरमें पीडा ज्वर और जिस ज्वरसे गला रुकजावे उसको आचार्योंने कण्ठकुब्ज कहाहै इसमें कफ मध्य वात, अधिक पित्त हीन होताहै ॥ १९ ॥

कण्ठकुब्जकी चिकित्सा ।

फलत्रिकत्र्यूषणमुस्तकट्वीकलिंगसिंहाननशर्वरीभिः ॥
क्वाथः कृतः कृंतति कंठकुब्जं कंठीरवः कुंजरमाशु यद्वत् ॥१२०॥

अतः परं क्वाथादिकमाह-फलत्रिकेति ॥ फलत्रिकं त्रिफला, त्र्यूषणं त्रिकटु, मुस्तं घनं, कट्वी तिक्ता, कलिंग इंद्रयवः, सिंहाननो वासा, शर्वरी निशा हरिद्रेति यावत् । एतैरौषधैः कृतः क्वाथः कण्ठकुब्जं कृंतति नाशयति । अत्र दृष्टांतमाह-कंठीरवः सिंहः यद्वत् कुंजरं गज-मिव ॥ १२० ॥

त्रिफला, त्रिकुटा, मोथा, कुटकी, इन्द्रजौ, बांसके पत्ते, हलदी इन औषधियोंका क्वाथ जैसे सिंह हाथीको मारताहै उसी तरह यह कण्ठकुब्जका नाश करताहै ॥ १२० ॥

विश्वापथ्यावचामुस्ताधान्यकट्तृणकट्फलम् ॥
भार्गीदारुरजः शृंगीक्षौद्रहिंगुसमन्वितम् ॥ २१ ॥
कफवातमरुच्छूलकंठकुब्जहरं परम् ॥
अथ गोमूत्रयुङ्मुस्तकट्वीकट्फलवत्सकम् ॥ २२ ॥

विश्वेति ॥ एतद्विश्वैकादशकं निःक्वाथ्य कीदृशं विश्वादिकं क्षौद्रं, मधु, हिंगु रामठं, तद्वर्जितं ग्राह्यं,ताभ्यां समन्वितं युक्तं सत् कफयुक्तो यो वातः तं मरुच्छूलं वातशूलम् एतैर्युक्तं कंठकुब्जं संनिपातं हरति कफवातमरुच्छू-लेत्यादिना कंठकुब्जे कफमध्यता वातोल्बणता च ज्ञापिता । विश्वं शुंठी, पथ्या हरीतकी, वचा उग्रा, मुस्ता घनं, धान्यं कुस्तुंबरी, कट्तृणं रोहिषं, कट्फलं सोमवल्कलं, भार्गी पद्मा, दारु देवदारु, रजः कवचः, शृंगी कर्कटशृङ्गी । द्वितीयं क्वाथमाह-अथेति ॥ गोमूत्रेण युनक्ति गोमूत्रयुक्



तत्कृतावापमिति यावत् । तादृशं मुस्तादि वा कफादिहरम् । मुस्ता घनं, कट्वी कटुका, कट्फलं सोमल्कलं, वत्सकः कुटजम्, अयमपि कंठकुब्जापहः ॥ २१ ॥ २२ ॥

सोंठ, हरड, वचा, मोथा, धनियां, रौसा, ( एक सुगन्धित घास होतीहै, कायफल, भारंगी, देवदारु, पित्तपापडा, काकडासींगी, इनके क्वाथमें सहत और भुनी हुई हींग मिलाकर सेवन करनेसे ॥ २१ ॥ कफयुक्त वायुको तथा वातकी पीडायुक्त कण्ठकुब्जको दूर करताहै । और मोथा, कुटकी, कायफल, इन्द्रजौ इनका क्वाथ गोमूत्रयुक्त सेवन कियाहुआ कण्ठकुब्जको दूर करता है ॥ २२ ॥

किरातकटुकाकणाकुटजकंटकारीशटी-
कलिद्रुकिलिमाभयाकटुककट्फलांभोधरैः ॥
विषामलकपुष्करानलकुलीरशृंगीवृषै-
र्महौषधसखैरयं जयति कंठकुब्जं गणः ॥ २३ ॥

सर्वोत्कृष्टक्वाथमाह-किरातेति ॥ किरातो भूनिंबः, कटुका तिक्ता, कणा कृष्णा, कुटजम् इंद्रयवः, कंटकारी व्याघ्री, शटी कर्चूरः, कलिद्रुः बिभीतकं, किलिमं देवदारु, अभया हरीतकी, कटुकं मरिचं कट्फलं सोमवल्कलम्, अंभोधरं मुस्तं, विषा अतिविषा, आमलकं धात्री, पुष्करं पुष्करमूलम्, अनलश्चित्रकः, कुलीरशृंगी कर्कटशृंगी, वृषो वासा । किंभूतैरेतैः । महौषधं शुंठी सैव सखा सहायो येषां तैः शुंठीयुक्तैरिति यावत् । अयं किरातादिगणः समूहः कंठकुब्जं जयति ॥ २३ ॥

चिरायता, कुटकी, पीपर, इन्द्रजौ, कटेरी, कचूर, बहेडा, देवदारु, हरड, मरिच, कायफल, मोथा, अतीस, आमला, पुहकरमूल, चित्रक, काकडासींगी, अडूसा ( बांसेके पत्ते ) सोंठ, यह किरातादिगणका क्वाथ कण्ठकुब्जको दूर करताहै ॥ २३ ॥

शीताङ्गसन्निपातके लक्षण ।

हिमश्लथवपुर्वमिक्लमथुकासहिक्काज्वर-
स्वरक्षयविमोहवान्भवति येन जुष्टो नरः ॥
अपि श्वसनकंपनप्रलपनव्यथोपद्रुतः
कफातिसरणार्दितः स किल शीतगात्रः स्मृतः ॥ २४ ॥

अतः परं शीतांगमाह-तल्लक्षणान्निर्णीतो हिमवपुरिति ॥ येन जुष्टः अभिव्याप्तो नरो भवति । कीदृशः हिमम् अतिशीतं श्लथं शिथिलं वपु-

र्यस्य सः शैथिल्यं चात्र स्वेदोद्गमात् । न चात्रास्यानुक्तेः कथमेतदिति वाच्यम्, अमितस्वेदशैत्यहरमिति रसाद्युद्धूलनगुणोक्तिव्याजेनाग्रे तदुपदेशात्, संनिपाते प्रायशः शैत्यस्य स्वेदसाहचर्याच्च । तथा वम्यादिसत्तकवान् ज्वरस्तापः, स्वरस्य वर्णोच्चारस्य क्षयः श्वसनादिभिरुपद्रवतोऽपि । अपीति निश्चितं श्वसनं श्वासः, कंपनं चलनं, प्रलपनं मिथ्याभाषणं, तेषां व्यथा पीड़ा तोदादिका, तया उपद्रुतः व्याप्तः कफातिसरणाभ्यां पीडितश्च । एतेन वातश्लेष्माधिकता परिशेषाद्धीनपित्तता । स एवं विधः शीतगात्रः शीतांगः स्मृतः ॥ २४ ॥

अत्यन्त शीतसे शिथिल शरीर वमन, क्रमथु ( खेद ) हिचकी, खांसी, ज्वर, स्वरभंग, मोह, श्वास, कम्प, प्रलाप, तोदभेदादि पीडा इन उपद्रवोंसे पीडित कफ और अतिसारसे पीडित मनुष्यको शीताङ्गसन्निपात जानना चाहिये ॥ २४ ॥

भास्वन्मूलाजाजियुग्व्योषभार्गी
व्याघ्रीशृंगीपुष्करं गोजलेन ॥
सिद्धं सद्यः शीतगात्रार्त्तिमोह-
श्वासश्लेष्मोद्रेककासान्निहंति ॥ २५ ॥

लक्षणमुक्त्वा क्वाथमाह-भास्वदिति ॥ अर्कमूलं, जीरकद्वयं, व्योषं त्रिकटुकं, भार्गी, व्याघ्री, शृंगी कर्कटशृंगी, पुष्करं पुष्करमूलम्, एतदौषधं गोजलेन गोमूत्रेण सिद्धं सत् सद्यस्तत्क्षणात् शीतगात्रेण या अर्तिः पीडा, मोहः, श्वासः, श्लेष्मण उद्रेकः कासश्च तान्सर्वान्निहंति नाशयति ॥ २५ ॥

आकको जड, सफेद जीरा, काला जीरा, सोंठ, मिरच, पीपर, भारंगी, कटेरी, काकडासींगी, पुहकरमूल इन औषधियोंका गोमूत्रके साथ कियाहुआ क्वाथ शीतांग सन्निपातकी पीडा, मोह, श्वास, श्लेष्मवृद्धि और खांसीको दूर करताहै ॥ २५ ॥

कर्कोटिकाकंदरजःकुलत्थकृष्णावचाकट्फलकृष्णजीरैः ॥
किराततिक्ताग्निककट्वलाबुपथ्याभिरुद्वर्त्तनमेव शस्तम् ॥ २६ ॥

क्वाथमुक्त्वोद्वर्त्तनं वक्ति-कर्कोटिकेति ॥ कर्कोटिकामूलचूर्णं कुलत्थः, कृष्णा पिप्पली, वचा कट्फलं कृष्णजीरं किरातो भूनिंबः तिक्ता कट्वी, अग्निकश्चित्रः, कट्वलाबुः कटुतुंबी, पथ्या हरीतकी । अत्र सन्निपाते एतैरुद्वर्त्तनं मर्दनं प्रशस्तम् ॥ २६ ॥



कर्कोटिका बनकरेलाकी जड, कुलथी, पीपर, वच, काला जीरा, चिरायता, कुटकी, चित्रक, कायफल, कडवी तुम्बीका गूदा, हरड, इन औषधियोंको शीताङ्ग सन्निपातमें मर्दन करना चाहिये ॥ २६ ॥

रसविषमरिचमहेशप्रियफलभस्मैकभूचतुर्वसुभिः ॥
भागैर्मितमुद्धूलनमिदममितस्वेदशैत्यहरम् ॥ २७ ॥

रसेति ॥ रसः पारदः, विषं प्रसिद्धं, मरिचं तीक्ष्णं, महेशप्रियो धत्तूरस्तस्य फलभस्म । भस्मेत्यत्र समाहारत्वादेकवद्भावः । एतेषां भागाः रसस्यैकभागः । विषस्यः भूः एकभागः मरिचस्य चतुर्भागः । धत्तूरभस्मनः अष्टौ भागाः । इदमुद्वर्त्तनं सद्यस्तत्क्षणं स्वेदशैत्यहरं भवति ॥२७॥

पारा एक भाग, सींगिया एक भाग, मरिच चार भाग, धतूरेकी भस्म आठ भाग इन औषधियोंके चूर्णकी मालिस अत्यन्त पसीना और शीतको दूर करतीहै ॥ २७ ॥

रसगंधकद्युमणितीव्रविषत्रिकटूनि टंकणयुतानि मुहुः ॥
शिखिशूकरानिमिषपित्तवरैः परिमर्द्य भावितमथाग्निरसैः ॥२८॥

रसगंधेति ॥ रसो हिंगुलुकृष्टादिना, गंधकश्च सक्षीरभांड कूर्पयुतादिना विषं च गोमूत्रे निःक्षिप्य कुमारी रसभावना, टंकणं च भर्जनादिना शोधनीयम् । ताम्रं च मारितमेव । रसादीनि नवसमांशानि । रसः पारदः गंधकः द्युमणिस्ताम्रं, तीव्र आकारकरभः, विषं प्रसिद्धं, त्रिकटु व्योषम्, एतानि सर्वाणि टंकणेन क्षारेण युतानि युक्तानि । शिखी मयूरः, सूकरो वनसूकरः, अनिमिषो मत्स्यः, एषां पित्तवरैः उत्तमैः मांसरसैर्मुहुर्वारंवारं, परिमर्द्य मर्दनं कृत्वा, भावितम् एकैकस्य रसस्य प्रत्येकं सप्त भावनाः । अथ पश्चात् अग्नेश्चित्रकस्य रसैः क्वाथैर्भावितं भावनाः सप्त संप्रदायात् ॥ २८ ॥

हिंगुलसे निकालाहुआ शुद्ध पारा, शुद्ध गंधक, तामेकी भस्म, तीव्र ( अकरकरा ) शुद्ध सींगिया, सोंठ, मिरच, पीपर, और शुद्ध सुहागा इन औषधियोंमें ( सुहागा भुननेहीसे शुद्ध होताहै ) मोर, जंगली सूअर तथा मच्छियोंके उत्तम पित्तसे मर्दन कर चित्रकके रससे भावना देना चाहिये ॥ २८ ॥

गुटिकी कृतं द्विगुणवल्लमितं घनसारजीरककणार्द्ररसैः ॥
अतिशैत्यमोहयुतमप्यचिराज्जयति ज्वरं तमपि मृत्युकरम् ॥ २९ ॥

गुटिकीति ॥ द्विगुणवल्लेन गुंजाषट्केण मितं गुटिकीकृतमिदमौषधं घनसारः कर्पूरः षोडशांशः जीरककणे च शाणमाने । आर्द्रम् आर्द्रकस्वरसश्च कर्षः संप्रदायात् । तैः सह पीतमिति शेषः । तं प्रकरणाच्छीतांगं मृत्युकरमपि ज्वरं जयति । कीदृक् अतिशैत्यं शीतांगं मोहस्तंद्रा ताभ्यां युक्तः ॥ २९ ॥

पुनः दो गुंजाके परिमाणसे गोली बनाकर कपूर, जीरा, पीपर तीन मासा एक तोला अदरखके रसके साथ सेवन करना चाहिये । इससे अत्यन्त शीत, मोहसे युक्त मृत्युको करनेवाला सन्निपातज्वर शीघ्र दूर होजाताहै ॥ २९ ॥

दशमूलांभसा सिद्धो दशांगः प्रथितो गणः ॥
सार्द्रकस्वरसः पीतः सादयत्युद्धतं ज्वरम् ॥ १३० ॥

दशमूलांभसेति ॥ दशमूलस्यांभसा क्वाथेन सिद्धः कथितः सार्द्रकस्वरसः आर्द्रकरसेन युक्तः प्रथितः वातश्लेष्मज्वराधिकारे 'मुस्तं सकुस्तुंबुरु' इत्यादिनोक्तः विख्यातः दशांगो गणः पीतः सन् उद्धतम् अत्युत्कटं ज्वरं शीतांगं सादयति नाशयति । विशरणं नाशः । सादयति सदेर्हेतुमतिचेति णिच् । अत्राष्टमांशावशिष्टेन क्वाथेनाष्टमांशावशिष्टं क्वाथांतरं साधयेदिति संप्रदायः ॥ १३० ॥

दशमूलकी औषधियोंके क्वाथसे सिद्ध कियाहुआ वातश्लेष्मज्वरके अधिकारमें कहेहुए दशांग गणका क्वाथ आर्द्रकके स्वरसके साथ-पियाहुआ उद्धत सन्निपातज्वरको दूर करताहै । यहां दशमूलकी औषधियोंका अष्टमांश क्वाथ करे और फिर उसी अष्टमांश क्वाथके जलसे दशांगगणकी औषधियोंका अष्टमांश क्वाथ करना चाहिये ॥ ३० ॥

इति शीताङ्गसन्निपातचिकित्सा ।

---

तन्द्रिकसन्निपातके लक्षण ।

कठिनविपुलकंटका रसज्ञा क्लममदकर्णरुजोतिकण्ठकण्डूः ॥
तृडतिसरणतीव्रतापतंद्राज्वरकसनश्वसनानि तंद्रिके स्युः ॥३१॥

अथ तंद्रिकं वक्ति कठिनेति ॥ तंद्रा विद्यते यस्मिंस्तन्नियोगात्तंद्रिकस्तस्मिन् तंद्रिके संनिपाते रसज्ञा षड्रसज्ञा जिह्वा कठिना खरस्पर्शा विपुला महांतः कंटकाः कंटकाकाराः मांसांकुराः यस्यां सा भवति । क्लमः खेदः भ्रांतिः कर्णपीडा भवति । अति अत्यंतं कण्ठे कण्डूर्भवति । तृडादयो भवंति तृट् तृषा, अतिसरणमतीसारः, तीव्रेति तापतन्द्र्योर्विशेषणं



तापोऽत्र मानसो ज्वरस्तंद्रा असंज्ञा, ज्वरः कसनं कासः श्वसनं श्वासः एतानि भवंति । अत्र कठिनेत्यादिना तंद्रेत्यादिना च वातकफोल्बणता परिशेषाद्धीनपित्तता ॥ ३१ ॥

तन्द्रिक सन्निपातमें कडी तथा लम्बी कांटोंसे व्याप्त जीभ होजातीहै । खेद, भ्रान्ति, कानमें दर्द, कण्ठमें अत्यन्त खुजली, प्यास, अतीसार, प्रचण्डमानसिक ज्वर, अत्यन्त तन्द्रा-तन्द्राके लक्षण "इन्द्रियार्थेष्वसम्प्राप्तिर्गौरवं जृम्भणं क्लमः । निद्रार्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत् ॥" शारीरिक ज्वर, खांसी, श्वास ये लक्षण होतेहैं । इस तन्द्रिक सन्निपातमें वातश्लेष्मकी अधिकता और पित्तकी हीनताहै ॥ ३१ ॥

चिकित्सा ।

निदिग्धिकापुष्करमूलपथ्याविश्वामृतास्तंद्रिकरुक्षु पथ्याः ॥
शुंठीकणागस्त्यरसोषणानि नस्येन तंद्राविजयोल्बणानि ॥३२॥

लक्षणमुक्त्वा क्वाथमाह-निदिग्धिकेति ॥ निदिग्धिका व्याघ्री, पुष्करमूलं पौष्करं, पथ्या हरीतकी, विश्वा शुंठी, अमृता गुडूची, एता औषधयः तंद्रिकस्य रुक्षु पीडासु पथ्याः श्रेष्ठाः योग्याः । एतस्मिन् श्लोके नस्यमाह-शुंठीति । शुंठी विश्वा, कणा पिप्पली, ऊषणं मरिचम, एतानि अगस्त्यरसेन सह पिष्ट्वा नस्येन नावनेन तंद्राविजये तंद्रिकजये उल्बणानि उत्कृष्टानि भवंति ॥ ३२ ॥

कटेरीकी जड, पुहकरमूल, हरड, सोंठ, गिलोय इनका क्वाथ तन्द्रिकसन्निपातकी पीडामें पथ्य है । नस्य कहतेहैं-सोंठ, पीपर, काली मिरच इन औषधियोंको अगस्त्यके फूलोंके रसमें पीसकर नस्य देनेसे तन्द्रिक सन्निपात दूर होताहै ॥ ३२ ॥

मरिचकणपचंपचावचारु-
कृमिहरनागरशर्वरीगवाक्ष्यः ॥
छगलकजलकल्किता नितांतं
नसि निहिता ननु तंद्रिकं जयन्ति ॥ ३३ ॥

अपरं नस्यमाह-मरिचेति ॥ मरिचमूषणं, कणा पिप्पली, मरिचकणयोः समाहारस्ततो द्वंद्वः । पचंपचा दारुहरिद्रा, वचा उग्रा, रुक् कुष्ठं, कृमिहरं विडंगं, नागरं शुंठी, शर्वरी निशा हरिद्रेति यावत्, गवाक्षी इंद्रवारुणी, एताः छगलकोऽजस्तस्य जलं मूत्रं तेन सह कल्किताः पिष्टाः सत्यः नितांतमत्यर्थं नसि नासिकायां निहिता

अर्थाद्वर्पीडिताः संत्यो नासेन कृत्वा तंद्रिकं संनिपातं जयंति नाशयंतीत्यर्थः ॥ ३३ ॥

मरिच काली, पीपर, देवदारु, वच, कुठ, वायडिंग, सोंठ, हलदी, इन्द्रायण इन औषधियोंको बकरेके मूत्रमें पीसकर नासिकाद्वारा सूंघनेसे निश्चय तन्द्रिकसन्निपात दूर होताहै ॥ ३३ ॥

तुरंगलालालवणोत्तमेंदु-
मनःशिलामागधिकामधूनि ॥
नियोजितान्यक्षणि निश्चितं
द्राक्तन्द्राविलासं विनिवारयंति ॥ ३४ ॥

अंजनं वक्ति तुरंगेति ॥ लवणोत्तमं सैन्धवम्, इंदुः कर्पूरः, मनःशिला मागधिका, पिप्पली, मधूनि माक्षिकं द्वंद्वे बहुत्वम् । एतानि सर्वाणि संचूर्ण्य तुरंगलालया घृष्ट्वा अक्षिणी नेत्रे नियोजितानि प्रेरितानि द्राक् सकृदेव निश्चितमवश्यं तंद्राया विलासं सामर्थ्यं विनिवारयंति अपघ्नंति ॥ ३४ ॥

सेंधानोन, कपूर, मनसिल, पीपर, सहत इन औषधियोंको घोडेकी लारमें मिलाकर आंखोंमें अंजन करनेसे निश्चय तन्द्रा दूर होजाताहै ॥ ३४ ॥

किरातविषतिंदुकाकलकरार्द्रकर्चूरवा–
जवाज्जयति तंद्रिकं सुरसजोऽवलीढो रसः ॥
अथ त्रिकटुराजिकाकृमिजिदुग्रगंधारजः
सजच्छिरसि संततं वपुषि च स्वगुप्तान्वितम् ॥ ३५ ॥

अथावलेहं वक्ति किरातेति ॥ किरातादिप्रतीवापवान् सुरसजः तुलसीपत्रजो रसः अवलीढः पीतः सन् जवात् वेगात् तंद्रिकं जयति । अत्र तुलसीरसश्चतुष्पलः । आवापः कर्षमात्रः किरातो भूनिंबः, विषतिंदुकः कुचिला, आकलकरस्तीव्रः, आर्द्रम् आर्द्रकं, कर्चूरः शटी । श्लोकार्द्धतोद्वर्तनमाह–अथेति । त्रिकटु त्र्यूषणं, राजिका, कृमिजिद्विडंगम्, उग्रगंधा वचा एतेषां रजश्चूर्णं संततं शीघ्रं शिरसि सजत्संगं प्राप्नुवत् सत् घृष्यमाणमिति यावत् । वपुषि च स्वगुप्तया कपिकच्छ्वा अन्वितं सत तंद्रिकं जयति । लटः शत्रादेशः, शिति दंशसंजेति नलोपः ॥ ३५ ॥

चिरायता, कुचिला, अकरकरा, अदरख, कचूर इन औषधियोंका चूर्ण तुलसीके पत्तोंमें चाटा हुआ शीघ्र ही तन्द्रिक सन्निपातको जीतताहै और सोंठ, मिरच, पीपर, राई, वायविडंग, वच



इनका चूर्ण शिरमें निरन्तर मलनेसे तथा और शरीरभागमें कैंचकी फरीका थोडा चूर्ण इसी चूर्णमें मिलाकर मर्दन करनेसे तन्द्रिक सन्निपात दूर होताहै ॥ ३५ ॥

## प्रलापसन्निपातका लक्षण ।

प्रलपति तरसोत्तिष्ठति विचेतनो वेपते मुहुः पतति ॥
ज्वरभवदाहाकुलितो येन नरः स प्रलापकः प्रोक्तः ॥ ३६ ॥

अथ प्रलापमाह–प्रलपतीति ॥ अत्र मुहुरिति क्रियामात्रे संबध्यते । येन हेतुना नरः मुहुः प्रलपति मिथ्या भाषते, तरसा वेगेन उत्तिष्ठति, विचेतनो विसंज्ञः सन् वेपते कंपते, मुहुः पतति, एतच्च "संज्ञाप्रणाशो वैकल्यं शंखपीडातिवाक्यता ॥ कंपस्तंद्रादयो दोषाः प्रलापिनि भवन्ति हि ॥" इत्युक्तानां शंखपीडादीनामुपलक्षणम्, एतेन वातोल्बणता तथा ज्वरभवेन दाहेन आकुलितो व्याप्तः एतेन पित्तमध्यता परिशेषात्कफहीनतेति । सः प्रलापकः प्रोक्तः कथितः ॥ ३६ ॥

जिस रोगसे मनुष्य प्रलाप ( झूटबोलना बडबडाना ) करताहै वेगसे उठताहै, चेतनाहीन होताहै, कांपताहै, बारबार गिरताहै, ज्वरसे उत्पन्नहुई दाहसे व्याकुल रहताहै ऐसे रोगको प्रलापक सन्निपात कहतेहैं ( इस प्रलापकमें वातोल्बणता पित्त मध्यम कफ हीन होताहै ) ॥ ३६ ॥

## प्रलापकचिकित्सा ।

सतगरवरतिक्तारेवतांभोदतिक्ता-
नलदतुरगगंधाभारतीहारहूराः ॥
मलयजदशमूलीशंखपुष्प्यः सुपक्वाः
प्रलपनमपहन्युः पानतो नातिदूरात् ॥ ३७ ॥

लक्षणमुक्त्वा प्रतीकारमाह–सतगरेति ॥ सतगरवरतिक्ताः तगरश्च वरतिक्तश्च वरतिक्तोऽत्र पर्पटो न तु महानिंबः तंत्रांतरानुरोधात । ताभ्यां सह वर्तमानः आरेवत आरग्वधः, अंभोदो मुस्ता, तिक्ता कटुी, नलदं मांसी, तुरगगंधा अश्वगंधा, भारती ब्राह्मी, हारहूरा द्राक्षा, द्वंद्वे च बहुत्वं मलयजं चंदनं, दशानां मूलानां समाहारः दशमूली शंखपुष्प्यः एतेषां क्वाथः पानादतिदूरात् शीघ्रं प्रलपनमपहन्युः नाशयंति ॥ ३७ ॥

तगर, पित्तपापडा, अमलतास, मोथा, कुटकी, जटामांसी, असगंध, ब्राह्मी मुनक्का, चन्दन, दशमूल, शंखपुष्पी इन औषधियोंका काथ पानकरनेसे प्रलापकसन्निपात दूर होताहै ॥ ३७ ॥

सांत्वनैरंजनैस्तीक्ष्णैर्नस्यैस्तिमिरसेवनैः ॥
सर्वतो विकृतिं चित्तमस्य प्रकृतिमानयेत् ॥ ३८ ॥

सांत्वनैरिति ॥ सांत्वनैः मधुरवचनैः तीक्ष्णैरंजनैर्नस्यैर्नावनैश्च तिमिरसेवनैः तिमिरस्य लक्षणया प्रभूतांधकारगृहसेवनैः अस्य प्रलापकवतः पुंसः सर्वतो विकृतं सर्वेभ्यो वस्तुभ्यः विकारं प्राप्तं चित्तं प्रकृतिं स्वभावं आनयेत् ॥ ३८ ॥

मधुर वचन तथा तीक्ष्ण अंजन और तीक्ष्ण नस्य अत्यन्त अन्धकार युक्त घरके निवाससे प्रलापक सन्निपातवाले पुरुषके सब वस्तुओंसे विकृतहुए चित्तको प्रकृतिस्थ करे ॥ ३८ ॥

इति प्रलापकचिकित्सा ।

---

रक्तष्ठीवी सन्निपातके लक्षण ।

पिपासाहृल्लासारुचिदवथुकासारतिमद-
भ्रमश्वासाध्मानातिसृतिवमिहिक्काज्वरकरः ॥
स्मृतो रक्तष्ठीवी विपुलतमकोठोद्गमरुजा
परिम्लानो रोगी रुधिरमपि येनोद्गिरति च ॥ ३९ ॥

अथ रक्तष्ठीविनमाह-पिपासेति ॥ येन संनिपातेन रोगी पुमान् विपुलतमानामतिपृथुलानां कोठानां वरटीदंशसदृशपिटिकानां उद्गमस्य प्रादुर्भावस्य या रुक् तया परिम्लानो दुःखी यथा भवति तथा रुधिरम् अपिशब्दात्पित्तं च उद्गिरति निःष्ठीवति । भक्तस्य ष्ठीवनमुद्गिरणं यस्मिन्नस्तीति योगात्स रक्तष्ठीवी स्मृतः कथितः । कीदृशः पिपासाहृल्लासादीनां करः समूहो यस्मिन् सः दवथुः सर्वांगीणस्तीव्रो दाहः आध्मानं उदरापूर्णम्, एतेन पित्तोल्बणता वातमध्यता च परिशेषात्कफहीनतोक्ता ॥ ३९ ॥

प्यास, उबकाई, अरुचि, दाह, खांसी, पीडा, भ्रम, मद, श्वास, अफारा, अतीसार, वमन, हिचकी इन लक्षणोंयुक्त रक्तष्ठीवी सन्निपातसे प्रसित पुरुष होताहै और वर्रके काटेहुए ददोरोंके समान बडे २ ददोरोंकी पीडासे दुःखित रोगी रुधिर और पित्तको थूकताहै । उस पुरुषको रक्तष्ठीवी सन्निपातसे प्रसित जानना चाहिये । इस सन्निपातमें पित्त उल्बण, वात मध्यम, हीन कफ है ॥ ३९ ॥



चिकित्सा ।

रोहिषधन्वयवासकवासापर्पटगंधलताकटुकाभिः ॥
शर्करया सममेष कषायः संभवति क्षतजप्रशमाय ॥ १४० ॥

औषधान्याह-रोहिषेति ॥ शर्करया समं सार्द्धं शर्करावापस्तु पित्तोल्बणत्वादष्टमांशः रोहिषादिभिः एष कषायः क्षतजस्य रक्तस्य लक्षणया रक्तष्ठीविनः प्रशमाय नाशाय संभवति प्रभुर्भवति । रोहिषं कतृणं, धन्वयवासको दुरालभा, वासा वृषः, पर्पटः कवचः, गंधलता प्रियंगुः, कटुका कटुी, द्वंद्वे बहुत्वम् ॥ १४० ॥

रौसा, जवासा, अडूसा, पित्तपापडा, प्रियंगु कुटकी, इनके काथमें मिश्री मिलाकर पीनेसे रक्तष्ठीवी सन्निपात शान्त होताहै ॥ १४० ॥

पद्मकचंदनपर्पटमुस्ताजातिवरारुणचंदनवारि ॥
क्लीतकनिंबयुतं परिपक्वं वारि भवेदिह शोणितहारि ॥ ४१ ॥

अपरमाह-पद्मेति ॥ क्लीतकं यष्टीमधु, निंबो नेता तेन युतं युक्तं पद्मकादिकम् एतत्परिपक्वं क्वाथीकृतं वारि जलम् इह रक्तष्ठीविनि रोगे शोणितहारि भवति । पद्मकं पद्मकाष्ठं, चंदनं मलयजं, पर्पटः कवचः, मुस्ता वारिदः, जाती मालती, वरा त्रिफला, अरुणचंदनं रक्तचंदनं, वारि बालकम् ॥ ४१ ॥

पद्माख, चन्दन, सफेद पित्तपापडा, मोथा, चमेली, त्रिफला, लाल चन्दन, नेत्रवाला, मुरेठी, नीमकी छाल इनका क्वाथ रक्तष्ठीवी रोगमें रक्तको दूर करताहै ॥ ४१ ॥

मधुकमधूकपरूपकपाथश्चंदनवल्लवदारुसनाथः ॥
श्रीपर्णीफलशीतकषायः ससित इह स्यादस्रजयाय ॥ ४२ ॥

मधुकेति ॥ मधुकं यष्टीमधु, मधूकः मधूकवृक्षस्य पुष्पम्, परूषकः मधुरमुस्तभेदः, स उष्णकाले प्रभवति । फालिसा इति लोके । पाथः बालकं, चंदनं श्वेतं, वल्लवदारु गोपीसारिवेति यावत् । वृद्धदारुक इत्यन्ये । यष्टीमध्वादिभिः षड्भिः सनाथः सहितः श्रीपर्णीफलस्य शीतकषायः क्वाथः इह रोगे असृग्जयाय रुधिरनाशाय स्यात् । कीदृशः ससितः शर्करासमेतः । अत्र क्वाथवत्सितायास्त्वष्टमांशः ॥ ४२ ॥

मुरेठी, मौआके फूल, फालसा, नेत्रवाला, श्वेतचन्दन ( बल्लवदारु ) सारिवा अथवा विधारा बेलगिरी इन औषधियोंके शीत कषायमें मिश्री मिलाकर सेवन करनेसे रुधिर थूकना बंद होजाताहै ॥ ४२ ॥

तिल्वकहाटकगैरिकरक्तः श्यामासारघशुभ्रायुक्तः ॥
अंजनयुक् सिंहमुखस्वरसः शमयितुमस्रमिहानलसोऽयम् ४३

तिल्वकेति ॥ तिल्वको रोधः, हाटकं गैरिकं स्वर्णगैरिकं ताभ्यां रक्त आरक्तः, श्यामा प्रियंगुः, सारघं मधु, शुभ्राः शर्कराः ताभिर्युक्तः अंजनेन सौवीरांजनेन वा युनक्ति युक् सिंहमुखो वासा तस्य स्वरसो रसः, इह रोगे अस्रं शमयितुं नाशयितुं अनलसः उद्युक्ततरः ॥ ४३ ॥

लोध सोनिया गेरूसे लाल प्रियंगुमें सहत और मिश्री मिलाकर सेवन करनेसे रक्त शान्त होताहै । अथवा रसोत और अडूसेके पत्तोंका स्वरस रक्तष्ठीवी सन्निपातमें रक्तको शमन करनेके लिये श्रेष्ठतम है ॥ ४३ ॥

इति रक्तष्ठीविप्रतीकारः ।

---

भुग्ननेत्रसन्निपातके लक्षण ।

श्वसिति प्रलपति मुह्यति सततं ज्वरकासहासवाञ्जंतुः ॥
भुग्नदृशि संनिपाते भुग्नस्रस्ताक्षिमंडलो भवति ॥ ४४ ॥

अथ भुग्ननेत्रं व्याचष्टे श्वसितीति ॥ भुग्ना वक्रा दृग्नेत्रं यस्मादिति योगाद्भुग्नदृशि संनिपाते जंतुः सततं श्वसिति श्वासयुक्तो भवति । प्रलपति मिथ्याभाषणं करोति । मुह्यति मोहं प्राप्नोति । ज्वरश्च कासश्च हासश्च तैर्युक्तः । कीदृशो भुग्नं वक्रं स्रस्तं स्थानच्युतं च अक्ष्णोर्नेत्रयोर्मंडलं यस्य सः । अत्र वातेति "ज्वरो मोहः स्मृतिभ्रंशः शोफो नेत्रक्षयो भ्रमः ॥ वेपथुः कूजनं चापि भुग्ननेत्रे प्रजायते" इत्युक्तानामुपलक्षणं तेन वातोल्बणताप्रतीकारे शीता इति पित्तज्वरेति चोक्तेश्च पित्तमध्यता परिशेषात्कफहीनता ॥ ४४ ॥

भुग्ननेत्र सन्निपातमें मनुष्य श्वास अधिक लेताहै, बकताहै, मोहको प्राप्त होताहै, ज्वर, खांसी और हास्ययुक्त होताहै । भुग्ननेत्र सन्निपातमें नेत्रमण्डल टेढा होजाताहै । इसमें वात उल्बण मध्यभाग पित्त, और हीन कफ होताहै ॥ ४४ ॥

पिचुमंदपचंपचापटोलीत्रिफलातिनिदिग्धिकाब्दपीताः ॥
ज्वरमुग्रतरं विपाच्य पीता अपि चैतन्यहरं हरंति शीताः॥४५॥

औषधमाह–पिचुमंदेति ॥ पिचुमंदो निंबः, पचंपचा दारुहरिद्रा, पटोली कुलीकः, त्रिफलाः श्रेष्ठाः, तिक्ता कटुकी निदिग्धिका व्याघ्री, अब्दी मुस्तं, पीता हरिद्रा, एताः औषधयः विपाच्य उत्क्वाथ्य पीताः सत्यः शीता हिमीकृताः चैतन्यं हरंति । तादृशम् उग्रतरमपि ज्वरं हरंति । प्रकरणाद्भुग्ननेत्रम् ॥ ४५ ॥

नीम, देवदारु, परवरके पत्ते, त्रिफला, कुटकी, कंटेरी, मोथा, हल्दी इनका काथ ठंडाकर पीनेसे प्रचण्ड ज्वर तथा भुग्ननेत्रको दूर करताहै ॥ ४५ ॥



अरिष्टमुस्तात्रिफलापटोलक्षुद्राहरिद्रासुरदारुकट्व्यः ॥
विपाच्य पीता मदमोहपित्तज्वरप्रमाथाय भवंति पट्व्यः॥४६॥

अरिष्टेति ॥ अरिष्टो निंबः, मुस्ता वारिदः, त्रिफलाः श्रेष्ठाः, पटोलः कुलकः, क्षुद्रा व्याघ्री, हरिद्रा निशा, सुरदारु देवकाष्ठं, कट्वी कटुकी, द्वंद्वे बहुत्वम् । एताः विपाच्य क्वाथीकृत्य पीताः सत्यः मदमोहपित्तज्वरप्रमाथाय पट्व्यः समर्था भवंति ॥ ४६ ॥

नीमकी छाल, मोथा, त्रिफला, परवलके पत्ते, कटेरी, हल्दी, देवदारु, कुटकी इन औषधियोंका काथ मद मोह पित्तज्वरके नाशकरनेके लिये समर्थ है ॥ ४६ ॥

किरातकृष्णोपणराजिकाभिर्मधुप्लुताभिः प्रवरोऽवलेहः ॥
मधूकसारोपणरामठोग्रं नस्येंऽजने स्यान्मधुसिंधुकृष्णाः ४७॥

अस्मिन् श्लोके उपचारत्रयं वक्ति–किराततेति ॥ आदाववलेहः, नस्यम् अंजनं च । किरातं, रामसेनः, कृष्णा पिप्पली, उषणं मरिचं, राजिका कृष्णिका, एताभिः औषधीभिः कृतः अवलेहः प्रवरः श्रेष्ठः रोगनाशनः । किंभूताभिः मधुना सारघेण प्लुताभिः । मधुकसारः मधूकवृक्षस्य सारः, उषणं मरिचं, रामठं हिंगुरुग्रा वचा द्वंद्वैक्यम् । एतदौषधं नस्ये प्रयुक्तं, मधु सारघं सिंधु सैंधवं कृष्णा पिप्पली द्वंद्वैक्यम् । एतदौषधम् अंजने हितं स्यात् ॥ ४७ ॥

चिरायता, पीपर, मिरच, राईइन औषधियोंका चूर्ण सहतके साथ चाटना चाहिये । मौआके वृक्षका सार, मरिच, हींग, वच इन औषधियोंके चूर्णका नस्य देना चाहिये । सहत, सेंधानोन, पीपर इनका अञ्जन करना भुग्ननेत्र सन्निपातमें हितकारीहै ॥ ४७ ॥

तुरंगगंधालवणोग्रगंधामधूकसारोपणमागधीभिः ॥
बस्तांबुशुंठीलशुनान्विताभिर्नस्यं कृशं भुग्नदृशं करोति॥४८॥

नस्यमाचष्टे–तुरंगगंधेति ॥ तुरंगगंधा अश्वगंधा, लवणं सैन्धवम्, उग्रगन्धा वचा, मधुकवृक्षस्य सारो मज्जा उषणं मरिचं, मागधी पिप्पली,

एताभिः औषधीभिः कृतं नस्यं नासाये हितमौषधं नस्यं भुग्नदृशं भुग्ननेत्रं संनिपातं कृशं दुर्बलं करोति । किंभूताभिः वस्तांबु अजमूत्रं, शुंठी विश्वा, लशुनं म्लेच्छकंदं, तैरन्विताभिः युक्ताभिः ॥ ४८ ॥

असगन्ध, सेंधानोन, वच, मौआके वृक्षका भीतरका गूदा, मिरच, पीपर, बकरेका मूत्र, सोंठ, लहसन इन औषधियोंका नस्य भुग्ननेत्र सन्निपातको दूर करताहै ॥ ४८ ॥

पिचुमंदवचारविमूलमरुत्तरुगंधवधूतगरागुरुभिः ॥
मृदुमाल्यशठीतुदसिंदुकरुङ्मधुसर्षपकैरिह धूपवरः ॥ ४९ ॥

अथ धूपमाह-पिचुमंदेति ॥ पिचुमंदो निंबपत्राणि, वचा उग्रा, रविमूलम् अर्कमूलं मरुत्तरुर्देवदारुः, गंधवधू मांसी, तगरं वक्रम्, अगुरुजोंगकं, मृडमाल्यं रुद्रनिर्माल्यं बिल्वपत्राणीति यावत् । शठी कर्चूरस्तुदः पृथोद्राविण इति प्रसिद्धः कर्चूरविशेष इति केचित । उद इति भाषया प्रसिद्धो निर्यासविशेष इत्यन्ये । सिंदुकः निर्गुंडी, रुक्कुष्ठं मधु, सर्षपकः सिद्धार्थः, एतैः सह धूपवरः धूपश्रेष्ठः ॥ ४९ ॥

नीमके पत्ता, वच, आककी जड, देवदारु, जटामांसी, तगर, अगर, बेलपत्र, कचूर, उद, निर्गुण्डी, कूट, सहत, सरसों इन औषधियोंकी धूप भुग्ननेत्रको दूर करतीहै ॥ ४९ ॥

इति भुग्ननेत्रचिकित्सा ।

---

अभिन्यासके लक्षण ।

यस्तु संधिग्रहादीनां सर्वैर्लिंगैः समायुतः ॥
विशेषाद्दाहमोहाढ्यः सोऽभिन्यासोतिदुःसहः ॥ १५० ॥

अतः परमसाध्यतरमभिन्यासमाह-यस्त्विति ॥ यः सन्निपातः संधिग्रहादीनां संनिपातादीनां सर्वैः सकलैर्लिंगैः समायुतो युक्तः विशेषात् विशेषेण दाहेन मोहेन च आढ्यः पूर्णः सज्वरः अभिन्यासः अतिदुःसहः । संधिग्रहादीनामुक्तानां सर्वैर्लिंगैरित्यत्र चानिरुद्धानां यौगपद्येन संभवो विरुद्धानां पर्यायेणेति ध्येयम् । एतेन त्रिदोषोल्बणताऽभिहिता ॥ १५० ॥

जो सन्धिग्रह आदिक सन्निपातोंके सम्पूर्ण लक्षण युक्त हों और विशेष दाह और मोहयुक्त हो इस अत्यन्त दुःखसे सहनेयोग्य ज्वरको अभिन्यासज्वर कहतेहैं । इस ज्वरमें तीनों दोष बढे हुए रहतेहैं ॥ १५० ॥



अत एव विशेषज्ञैर्मुनिभिश्चरकादिभिः ॥
एक एवायमुद्दिष्टः सन्निपातात्मको ज्वरः ॥ ५१ ॥

अत एवेति ॥ यतः संधिगादिलक्षण एव अभिन्यासः अत एकोयमभिन्यास एव सन्निपातात्मको ज्वर उद्दिष्टः कथित इति योजना कैः विशेषज्ञैश्चरकादिभिर्मुनिभिः । सर्वलिंगसमवेतस्यैव सन्निपातज्वरत्वेन व्यपदेशत्वादिति भावः । विशेषज्ञैरित्यनेन च समुद्भवति संधिषु इत्याद्युक्तावस्थाविशेषे संधिगादित्वव्यपदेशः । यावदुक्तावस्थाविशेषेष्वभिन्यासव्यपदेशस्तेन नोक्तः त्रयोदशविधित्वानुपपत्तिरिति सूचितम् ॥५१॥

संधिगादि सम्पूर्ण सन्निपातोंके लक्षणयुक्त ही अभिन्यास होताहै इससे अभिन्यास एक ही सन्निपातात्मक ज्वर विद्वद्वर महर्षि चरकादिकोंने कहाहै । सम्पूर्ण दोषोंके लक्षणोंका समवाय होनेसे एक सन्निपातज्वर नामसे ही व्यपदेश कियाहै ॥ ५१ ॥

स्नेहावलीढः सितसर्षपाणां सहिंगुभृंगद्रवशृंगवेरः ॥
हन्यादभिन्यासगदोग्रशक्तिं यथाविरक्तं विषयाभिलाषः॥५२॥

अवलेहमाह-स्नेहेति ॥ हिंगू रामठं, भृंगद्रवो भृंगराजरसः, शृंगवेरं शुंठी, द्रवसंनिधानादार्द्रकरसो वा, तैः सह वर्तमानः सितसर्षपाणां सिद्धार्थानां स्नेहस्तेनावलीढः पीतः सन्, स्नेहमात्रा च पलमित्यादितोऽवगंतव्या । हिंग्वाद्यावापस्तु कषायवत् स्नेहस्याप्युद्धृतसारत्वेन कषायरूपत्वात् । अभिन्यासश्चासौ गदश्चाभिन्यासगदस्तस्योग्रशक्तिं हन्यात् नाशयेत् । अत्र दृष्टांतः-यथा विरक्तम् एकांतवासिनं यतिं विषयाभिलाषः विषयेच्छा हंति जयतीत्यर्थः ॥ ५२ ॥

हींग, भांगरेका स्वरस, अदरखका स्वरस, सफेद सरसोंके तेलके साथ चाटाहुआ महान् अभिन्यासज्वरकी शक्तिको नष्ट करताहै । जैसे विषयकी इच्छा एकान्तवासी विरक्त पुरुषको नष्ट करती है ॥ ५२ ॥

नस्यं हितं कोष्णजलेन कृष्णाशेफालिकासारघसिंधुतीव्रैः ॥
रसोनसिंधूत्थकणोषणोग्राशिरीषगोसूत्रयवाग्रजैर्वा ॥ ५३ ॥

नस्यमाह-नस्येति ॥ कृष्णा पिप्पली शेफालिका निर्गुंडी, सारघं मधु, सिंधुः सैंधवं, तीव्रः आकुलकरः अकरकरेति भाषायाम्-एतैर्नस्यं हितं कवष्णोदकेन । द्वितीयं नस्यं वक्ति । रसोनं लशुनं रसोनस्य रस एव ग्राह्यः । सिंधूत्थं सैंधवं, कणा कृष्णा, ऊषणं मरिचम्, उग्रा वचा,

शिरीषं शिरीषबीजं, गोमूत्रं, यवाग्रजं यवक्षारः एतेषां रसेन नस्यं हितम् ॥ ५३ ॥

पीपर, निर्गुंडी, सहत, सेंधानोन, अकरकरा इन औषधियोंका नस्य किंचित् गरम जलके साथ लियाहुआ अभिन्यासको दूर करताहै । लहसनका रस, सेन्धानोन पीपर, वच, सिरसके बीज, गोमूत्र, जवाखार इनका नस्य भी अभिन्यासज्वरको शीघ्र शान्त करताहै ॥ ९३ ॥

चरणतलालिकमौलिषु दाहादलगर्ददंशनादपि यः ॥
नो बुध्यते तमुग्रैर्वृश्चिकवरटीविषैर्व्यथयेत् ॥ ९४ ॥

उग्रप्रतीकारमाह-चरणेति ॥ चरणतलयोः अलिके ललाटे मौलिषु मस्तके दाहात् भाले लोहशलाकयेति वचनात् योऽभिन्यासी नो बुध्यते अलगर्दः जलव्यालः, जलसर्प इति लोके "अलगर्दो जलव्यालः" इत्यमरः । तस्य दंशनादपि यः अभिन्यासी न बुध्यते तं सन्निपातिनमभिन्यासिनम् उग्रैः वृश्चिकादिभिः व्यथयेत् पीडयेत । वृश्चिकः प्रसिद्धः वरटी गंधोली, पीतभ्रमरी, विषं वत्सनागादि स्थावरं तच्च मात्रया भक्षणे देयं संधिषु प्रच्छाद्य मर्दनीयं चेति संप्रदायः । यदौषधैः न बुध्यते तदा चिकित्सेयं कार्या ॥ ५४ ॥

दोनों पैरोंके तलवोंमें, ललाटमें, माथेमें, लोहकी शलाकाके दाहसे तथा जलमें रहनेवाले सर्पके काटनेसे भी जो अभिन्यासी चैतन्यताको प्राप्त न हो उसको अत्यन्त विषैले बिच्छू अथवा बर्रके विषसे पीडित करना चाहिये । अर्थात् संधिस्थानको ढांककर और स्थानोंमें विषका मर्दन करे ॥ ९४ ॥

क्षुद्रागंधपलाशपुष्करजटादुःस्पर्शपद्मारसा-
श्रृंगीभिः क्वथितं पयः प्रशमयत्याश्वेव संज्ञाच्युतम् ॥
त्रायंतीदशमूलपुष्करवृषाव्याघ्रीशटीकारवी-
भार्ग्यैरण्डकटुत्रिकामृतलतागोमूत्रसिद्धास्तथा ॥ ९५ ॥

क्षुद्रेति ॥ क्षुद्रा व्याघ्री, गंधपलाशः कर्चूरः, पुष्करजटा पुष्करमूलं, दुस्पर्शो दुरालभा, पद्मा भारंगी, रसा रास्ना, श्रृंगी कर्कटश्रृंगी, एताभिः क्वथितं क्वाथीकृतं पयः क्वाथोऽयं अस्यैव रोगिणः संज्ञाच्युतिं प्रशमयति संज्ञां करोतीत्यर्थः । एतस्मिन् द्वितीयं क्वाथमाह-गोमूत्रे सिद्धास्त्रायंत्यादयस्तथा संज्ञाच्युतिं प्रशमयन्तीत्यर्थः । त्रायंती त्रायमाणा, दशमूलं पुष्करमूलं, वृषा आटरूषः, व्याघ्री शठी, कारवी शतपुष्पा, भार्गी एरंडजः, कटुत्रिकं व्योषम्, अमृतलता गुडूची ॥ ९५ ॥



कटेरी, कचूर, पहुकरमूल, जवासा, भारंगी, रासना, काकडासींगी इनका क्वाथ शीघ्र संज्ञा (चेतनता) को करताहै । द्वितीयक्वाथ-बनप्सा, दशमूल, पहुकरमूल, अडूसा, कटेरी, कचूर सौंफ, भारंगी, एरण्डकी जड, सोंठ, मिरच, पीपर, गिलोय इनका गोमूत्रमें सिद्धकियाहुआ क्वाथ संज्ञानाशको दूर करताहै ॥ ९९ ॥

शटीक्षुद्राशुंठीशिखिमरिचमालूरविकसा-
सुरुक्त्रायंतीभिर्वृषकणवचाभिः श्रृतजलम् ॥
अभिन्यासं हन्यादुपलभिदरिष्टं श्वसनजि-
द्रमाक्षुद्रांबष्ठासुरभिजलपक्कं तमथवा ॥ ९६ ॥

शटीति ॥ एताभिः शट्यादिभिस्त्रयोदशभिः शृतं जलं क्वाथः अभिन्यासं हन्यात् । शटी कर्चुरः, क्षुद्रा व्याघ्री, शुंठी विश्वा, शिखी चित्रकः, मरिचमूषणं, मालूरो बिल्वः, विकसा मंजिष्ठा, रसा रास्ना, रुक् कुष्ठं, त्रायंती त्रायमाणा, वृषो वासकः, कणा पिप्पली, वचा उग्रा । एतस्मिन् श्लोके द्वितीयं क्वाथं वक्ति । अथवा सुरभिजले गोमूत्रे पक्कं कथितं उत्पलभिदां पट्कं तम् अभिन्यासं हन्यात् । उत्पलभित् पाषाणभिद्, अरिष्टो निंबः, श्वसनजित् एरण्डो, रमा बिल्वः, क्षुद्रा व्याघ्री, अंबष्ठा पाठा ॥ ५६ ॥

कचूर, कटेरी, सोंठ, चित्रक, बेलगिरी, मजीठ, रासना, कूट, बनप्सा, अडूसा, पीपर, वच इनका क्वाथ अभिन्यासको दूर करताहै । पाषाणभेद निम्ब, एरण्डकी जड, बेलगिरी, कटेहरी, पाठा इनका भी गोमूत्रमें सिद्ध क्वाथ अभिन्यासको दूर करताहै ॥ ९६ ॥

सजीरकृष्णाकटुतुम्बिहेम-
बब्बूलपत्राऽसितजीरकोग्रैः ॥
हरीतकीकट्फलरुक्कुलत्थै-
रुद्धूलनं स्वेदमपाकरोति ॥ ९७ ॥

शीतस्वेदमपाकरणमाह-सजीरेति ॥ जीरः श्वेतः, कृष्णा पिप्पली, कटतुंबी, हेमः धत्तूरस्तस्यात्र बीजानि बब्बूलपत्राणि, असितजीरकः कृष्णजीरकः, उग्रा वचा, एताभिः सहितो, हरीतकी पथ्या कट्फलः सोमवल्कलं रुक् कुष्ठं, कुलत्थो धान्यविशेषः एतैः कृतमुद्धूलनं उद्वर्त्तनं स्वेदम् अपाकरोति नाशयति ॥ ५७ ॥

सफेद जीरा, पीपर, कडवी तौंबीका गूदा, धतूरेके बीज, बबूलेके पत्त, काला जीरा, बच, हरड, कायफल, कूट, कुलथी इनके चूर्णकी मालिश स्वेद ( पसीना ) को दूर करतीहै ॥ ९७ ॥

भार्गीनिंबघनोभयाऽमृतलताभूनिंबवासाविषा-
त्रायंतीकटुकावचात्रिकटुकश्योनाकशक्रद्रुमैः ॥
रास्नायासपटोलपाटलित्रिवृद्दार्वीविशालानिशा
ब्राह्मीपुष्करसिंहिकाद्वयशटीधात्र्यक्षदेवद्रुमाः ॥ ९८ ॥
क्राथोऽयं किल सन्निपातनिवहान्द्वात्रिंशदंगः क्षणाद्-
दुर्धर्षान्निजतेजसा विजयते सर्पान् गरुत्मानिव ॥
किंचिच्छ्वासबलासकासगुदरुग्हृद्रोगहिक्कामरु-
न्मन्यास्तम्भगलामयार्दितमलावष्टंभवर्ध्मानपि ॥ ९९ ॥

सर्वसंनिपातेषु योग्यं द्वात्रिंशाख्यं तं व्याचष्टे-भार्गीति ॥ निंबः, घनो मुस्तम्, अभया पथ्या, अमृतलता गुडूची, भूनिंबः किरातः, वासा वृषः, विषा अतिविषा, त्रायंती त्रायमाणा, कटुका वचा, त्रिकटुकः श्योनाकः, टिण्टुकः शक्रद्रुमः, वत्सकः रास्ना, यासो यवासः, पटोलं, पाटली वसंतदूती, त्रिवृत त्रिवृता, दार्वी दारुहरिद्रा, विशाला इंद्रवारुणी, निशा हरिद्रा, ब्राह्मी भारती, पुष्करं पुष्करमूलं, सिंहिकाद्वयं बृहती व्याघ्री, शटी, धात्री आमलकी, अक्षो बिभीतकं, देवद्रुमो देवदारुः॥९८॥ क्राथोयमिति ॥ एतैः कृतोऽयं क्राथः किलेति निश्चयेन सन्निपातस्य निवहान समूहान क्षणात शीघ्रं निजतेजसा स्वसामर्थ्येन विजयते। कीदृशान दुर्धर्षान दुष्टान् । अत्र दृष्टांतः कः कानिव, यथा गरुत्मान गरुडः सर्प्पान इव। एतानपि श्वासः श्वसनं, बलासः श्लेष्मा, कासः कसनं, गुदरुक् गुदपीडा, हृद्रोगः उरोरोगः, हिक्कामरुद्वातरोगः, मन्यास्तम्भो ग्रीवांगः, गलामयो गलरोगः, अर्दितो वायुः, मलावष्टंभो मलसंचयः, वर्ध्मः अंत्रवृद्धिः ॥ ९९ ॥

भारंगी, नीमकी छाल, मोथा, हरड, गिलोय, चिरायता, अडूसा, अतीस, त्रायमाण, कुटकी, बच, सोंठ, मिरच, पीपर, अरलू, इन्द्रजौ, रासना, जवासा, परवलके पत्त, पाडर, निशोथ, दारुहल्दी, इन्द्रायणकी जड, हलदी, ब्राह्मी, पुहुकरमूल, छोटी बडी दोनों कटेरीकी जड, कचूर, आमला, बहेडा, देवदारु इन ३२ औषधियोंका क्राथ अपने बलसे अत्यन्त बढेहुए, सन्निपातके समूहोंको शीघ्र नष्टकरताहै । जैसे गरुड पक्षी सर्पोंके समूहको नष्ट करताहै इसी-



तरह यह क्राथ भी सन्निपातसमूहको नष्ट करताहै। श्वास, कफ, खांसी, गुदाकी पीडा, हृदयरोग, हिचकी, वातपीडा, मन्यास्तम्भ, गलेका रोग, अर्दित रोग, मलका रुकना, अण्डकोशवृद्धि इन सबको दूर करताहै ॥ ९८ ॥ ९९ ॥

लोहाभ्रतारफणिवंगविभाकरेभ्यः
शुद्धं रसं त्रिगुणितं समगंधमिश्रम् ॥
संमर्द्य मेघरवसारघशिग्रुबिल्व-
ज्वालामुखीजलजजंबुरसेन यत्नात् ॥ १६० ॥
सामुद्रसंपिहितनिस्तलकाचकूप्यां
विन्यस्य मंददहने दिनयामपक्कम् ॥
उद्धृत्य तद्विमलविद्रुमचूर्णयुक्त-
मर्कांशमिश्रितविषं विषभृङ्गराख्यम् ॥ ६१ ॥

युग्मम् ॥ द्वात्रिंशदुक्तः अतः परं चिकित्सांतररसमाह-लोहेति ॥ लोहं लोहचूर्णम्, अभ्रम् अभ्रकं, तारं रौप्यं, फणिसीसं वंगत्रपुसं, विभाकरं ताम्रं, लोहादीनि शोधितमारितान्येव योज्यानि । एभ्यः षड्भः समुदितेभ्यः शुद्धं शोधितं रसं पारदं, कीदृशं रसं त्रिगुणितम्। अष्टादशांशं समगंधमिश्रं समेन गंधेन मिश्रं चतुर्विंशतिभागं गंधकं यत्र कज्जलीकृतमिति यावत । एतासां वक्ष्यमाणानामौषधीनां रसैः सार्द्धं समं, मेघरवस्तंदुलीयः, सारघेति मधुशब्दोपलक्षणं तेन सारघं शिग्रुर्मधुशिग्रुः, सौभांजनं बिल्वः श्रीकृष्णः ज्वालामुखीकुमारी जल-जजंबुसमाहारत्वादेकवचनं च प्रत्येकं पृथक् पृथक् यत्नात ॥ १६० ॥ सामुद्रेति ॥ सामुद्रेन लवणेन संपिहितायाम् आच्छादितायाम् । अर्थाल्लवणयंत्रस्थापितायां वर्तुलायां काचकूप्यां तन्मध्ये लोहादिसर्वं विन्यस्य संस्थाप्य मंददहने मंदाग्नौ, दिनयामपक्कं दिनस्य यामानर्था-च्चतुःप्रहरास्तैः पक्कम् उद्धृत्य काचकूप्यात् स्वांगशीतं पृथक्कृतं तदौषधम् अंभोदनादांघ्रिरसंगनायाः स्तन्ये निषिक्तानि सविद्रुमाणि तप्तानि मुक्तामणिपद्मरागमुख्यानि रत्नानि मूर्तिं व्रजंतीत्याद्युक्तप्रकारेण विमलानां शुद्धानां विद्रुमाणां प्रवालानां चूर्णेन युक्तं, तच्च भागानुक्ते लोहसमम् अर्कांशेन द्वादशांशेन द्वादशभागेन मिश्रितं विषं यस्मिन् विषभृद्गरेण आढ्यम् अहिफेनेन आढ्यं, तच्च विषतुल्यं तत्संनिधिपाठात॥६१॥

लोह, अभ्रक, चांदी, शीसा, वंग, ताम्बा इनकी भस्म इनसे तिगुना (अठारह गुना) पारा और सबके बराबर यानी चौबीस भाग शुद्धगंधक इन सबको खरलकर चौलाई, सहत, मीठा, सहजना बेलके पत्तोंका रस, ग्वारपाठा, कमल, जामुन इनके स्वरससे पृथक् पृथक् खरल करके इन सबको गोल आतसी शीशीमें भरकर फिर उस शीशीको वालुकायन्त्रकी तरह हंडीमें समुद्रनोन. इस तरहसे भरे ताकि वह शीशी चारों तरफसे नोनसे ढकजावे । फिर चार प्रहर तक मन्द २ अग्नि देवे स्वांगशीत होनेपर काचकी कुप्पीसे निकालकर मूंगाचूर्ण लोह समान और अफीम बारह भाग मिलाकर ॥ १६० ॥ ६१ ॥

संभावयेत्कुटिलवंजुलतालमूली-
नीलीदलानलनृपद्रुमकालमालैः ॥
मुंडीमुरामदनमालविकांशुमाल्यु-
न्मत्तामरद्रुमुनिमालतिकामधूकैः ॥ ६२ ॥
बीजपूरद्रवेणैव मरिचैश्च समन्वितः ॥
रसो वल्लमितः सर्वसन्निपातविघातकृत् ॥ ६३ ॥

संभावयेदिति ॥ ततः कुटिलादिभिः संभावयेद्भावनां कुर्यात् । कुटिलादीनां द्वंद्वः । संभावयेदित्यन्यथानुपपत्त्या कुटिलादिरसैरिति लभ्यते । कुटिलं तगरं, वंजुलो वेतसः, तालमूली मुसली, नीलीदलं नील्याः पत्रम्, अनलश्चित्रकः, नृपद्रुमः आरग्वधः, कालमालः कालशाकः, नगदवावची, मुंडी श्रावणी, मुरा गंधकुटी, मदनः, मालतिका जाती, मधूकः मधूकवृक्षस्य सारः, पश्चात्सप्तदश पुटाः कार्याः, पश्चाद्बीजपूरद्रवेण रसेन मरिचैः मरिचत्रयेण सह कार्यः। अयं रसः वल्लमितः गुंजात्रयप्रमाणः मरिचत्रयचूर्णेन युक्तः बीजपूररसः पलार्द्धम् एवं देयः सर्वे ये सन्निपातास्तेषां विघातकृद्भवति सन्निपातं जयति ॥ ६२ ॥ ६३ ॥

कुटिल ( तगर ) वेत, मूसली, नीलके पत्ते, चित्रक, अमलतास, कालशाक, बावची, मुंडी, कपूरकचरी, मैनफल पाठा, सूर्य्यमुखी, धतूरा, देवदारु, अगस्त, चमेली मौआ, इन सत्तरह औषधियोंकी भावना देकर १७ पुट देना चाहिये । फिर बिजोरेका रस तीन मिरचके साथ तीन गुंजा रस देना चाहिये । यह सन्निपातभैरवरस सन्निपात और विषका नाश करनेवाला है ॥ ६२ ॥ ६३ ॥

भागौ पारदगंधयोरमलयोर्देयास्त्रयरुयूषणा-
देकश्चोत्तमटंकणाद्दहनतस्तीव्रोत्तमाद्भृंगतः ॥

SOME MATERIAL IN THE ORIGINAL FILE CONTAINS MUTILATIONS AND OTHER DEFECTS.

THESE UNAVOIDABLY ARE PART OF THE FILMED FILE.



नागाद्द्वौ चरणोऽहिफेनत इदं संचूर्ण्य भृङ्गद्रवे
स्थाप्यं सप्तदिनात्पथैकमखिलं नेपालनीरेऽपि च ॥ ६४ ॥

अतः परं रुद्ररसं वक्ति-भागाविति । पारदो रसः, गंधो गंधकः, तयोर्द्वौ भागौ । किंभूतयोः, अमलयोः शुद्धयोः, त्र्यूषणात् त्रयो भागाः देयाः । एक इति भृगांतं प्रत्येकं संबध्यते । उत्तमटंकणात् एको भागः । दहनतश्चित्रकात् एको भागः । तीव्रोत्तमात् आकलकरात् अकरकरेति प्रसिद्धात् एको भागः । भृंगतो मार्कवादेको भागः । नागात् वत्सनागाद्द्वौ भागौ । अहिफेनतः चरणभागः पारदभागपादः, इदं सर्वं संचूर्ण्य पिष्ट्वा भृंगद्रवे मार्कवरसे, संस्थाप्य सप्तदिनानि नेपालनीरेऽपि दंतीबीजस्य क्वाथेपि चैकमखिलं दिनं स्थाप्यम् ॥ ६४ ॥

शुद्ध पारा और गंधक, सोंठ, मिरच, पीपर, उत्तम भुनाहुआ सुहागा, चित्रक, अकरकरा, भांगरा इन सबका एक एक भाग, शुद्ध सींगियाके दो भाग, और अफीमका चतुर्थांश ( यानी पारेके भागसे चौथाई भाग अफीम ) इन सबके चूर्णको भांगरेके स्वरसमें सात दिन भिगोवे और फिर एक दिन जमालगोटेके बीजके क्वाथमें भिगोवे । पुनः पीसकर मूंगके समान गोली बनावे और फिर एक या दो गोली दोषानुसार अनुपानसे देना चाहिये ॥ ६४ ॥

रुद्रेण ज्वरमर्दितं जगदिदं दृष्ट्वा रसो निर्मितः
सेव्यो वल्लमितः क्षणादिह नृणामुग्रज्वरान्निर्जयेत् ॥
संतापे शिशिरो विधिः समुदितः पथ्ये च शाल्योदनं
दध्ना शर्करयाथ दोषवशतो देशर्तुसात्म्येन वा ॥ ६५ ॥

रुद्रेति ॥ रुद्रेण शंकरेण इदं जगत् ज्वरमर्दितं दृष्ट्वा रसोऽयं निर्मितः । इह अभिन्यासे वल्लमितः सेव्यः । नृणां मनुष्याणां क्षणात्तत्कालम् उग्रज्वरान्संधिगादीन् सन्निपातान् जयेत् । सेवनाद्यदि संतापस्तर्हि तत्र शिशिरो विधिः शीतो विधिः समुदितो योग्यः । पथ्ये शाल्योदनं योग्यं, देशसात्म्येन ऋतुसात्म्येन वा दध्ना शर्करया वा देयं दोषवशात् । यथा-वाते दध्ना पित्तकफयोः श्वेतया । देशसात्म्येन यथा-जांगले दध्ना । अनूपे श्वेतया । ऋतुसात्म्येन यथा-वर्षाहेमंतशिशिरेषु दध्ना । इतरेषु श्वेतयेत्यादि । अनुपानं तु आर्द्रकरसादि यथादोषं ध्येयम् ॥ ६५ ॥

शिवजीने जगत्को ज्वरसे पीडित देखकर यह रस बनायाहै । इससे इस रसका नाम रुद्ररस है । अभिन्यासमें गुंजापरिमाण सेवन करना चाहिये । मनुष्योंके तत्काल प्रचण्ड सन्निपातज्व-

रोंको जीतता है । यदि रसके सेवनसे गरमी मालूमहो तो शीतविधि करना चाहिये । और पथ्य-शाठीके चावलोंका भात, देश और ऋतुकी सात्म्यतासे तथा दोषवशसे दही अथवा मिश्रीके साथ देना चाहिये । जैसे वातदोषमें दही और पित्त कफमें मिश्री, एवं जांगल देशमें दही और आनूपमें मिश्री तथा वर्षा शिशिर हेमंतमें दही और शरद वसन्त ग्रीष्ममें मिश्रीके साथ शाठी चावलोंका भात देना पथ्य है । अनुपान आर्द्रक सहत आदिक यथादोष देखकर देना चाहिये ॥ ६५ ॥

इति अभिन्यासचिकित्सा ।

---

जिह्वकसन्निपातके लक्षण ।

कठिनतरकंटकावृतरसनो न शृणोति भाषते नापि ॥
ज्वरकासमोहतापश्वासयुतो जिह्वकाक्रांतः ॥ ६६ ॥

अथ जिह्वकमाचष्टे कठिनेति ॥ जिह्वकेन आक्रांतो नरो न शृणोति, नापि भाषते एतेन वातोत्तरता । कीदृशो नरः । कठिनतरैरतिशयेन काठिनैः कंटकैः आवृता रसना जिह्वा यस्य सः, ज्वरादियुतश्च भवति । एतच्च "श्यावकंटकिनी जिह्वा कासः श्वासः कफस्तथा ॥ बाधिर्य बलहानिश्च मूकता जिह्वके भवेत् ॥" इति कफबलहान्योरुपलक्षणम् । एतेन कफमध्यता पित्तहीनता चोक्ता । कुत्सिता जिह्वा इति जिह्वकः, कुत्सायां कन् । जिह्वको विद्यते यस्मिन्निति जिह्वकः अर्कादित्वात्कन्६६॥

जिह्वक सन्निपातसे दुःखित मनुष्य अत्यन्त कडे कांटोंसे व्याप्त जीभवाला होताहै अर्थात् जीभपर कठिन कांटेसे पैदा होजातेहैं, सुनताभी नहीं और बोलता भी नहीं है । ज्वर, खांसी, मोह, सन्ताप, श्वाससे युक्त रहताहै ॥ ६६ ॥

कटुतैलारनालाभ्यां कुर्वीत कवलग्रहम् ॥
केवलेनाथ वा सद्यः कांजिकेनाऽस्य शुद्धये ॥ ६७ ॥

कटुतैलेति ॥ कटुतैलं सर्षपतैलम्, आरनालं कांजिकं, ताभ्यां कवलग्रहं कवलस्य ग्रहं धारणं कुर्वीत । अथवा केवलेन कांजिकेन राजिकाकल्पितेन आस्यविशुद्धये मुखशुद्ध्यर्थं कवलग्रहं कुर्यात् । तन्मर्यादा च कफपूर्णास्यता यावत्स्रवद्घ्राणाक्षिताथवेत्युक्ता ॥ ६७ ॥

चिकित्सा-सरसोंका तेल, और कांजीके कवलग्रह मुखमें रखे । अथवा शीघ्र कांजीका ही कवल (ग्रास) मुखकी शुद्धिके लिये रखे । कवलग्रह रखनेकी मर्यादा यह है कि जब मुंह कफ पूर्ण हो आंख नाकसे पानी झरनेलगे तब कवल (ग्रास) का परित्याग करना चाहिये ॥ ६७ ॥



किराततिक्ताऽऽकलकृत्कुलिंजकर्चूरकृष्णाः कटुतैलयुक्ताः ॥
अम्लद्रवः संशमयेद्रसज्ञादोषांस्तुतो दाशरथिर्यथाशु ॥ ६८ ॥

मुखशुद्धिमुक्त्वा क्वाथमाह-किरातेति ॥ किरातो रामसेनः, तिक्ता कटुकी, आकलकृत् आकरकरः, कलिंजः कुलिंजनः, कर्चूरः शटी, कृष्णा मागधी, कटुतैलं सार्षपं तैलं तेन युक्ताः । अम्लद्रवो बीजपूरादिर्द्रवो रसः, रसज्ञाया जिह्वाया दोषान्कंटकादीन् संशमयेत् । आशु शीघ्रम् । अत्र दृष्टांतः-यथा-दाशरथी रामचन्द्र आशु शीघ्रं स्तुतः संसेवितः सन् रसज्ञायाः दोषान् मूकतानृतवचनादीन् । अयं च प्रकरणात् कवलग्रहः पेय इति कश्चित् । संशमयेन्नाशयति ॥ ६८ ॥

चिरायता, कुटकी, अकरकरा, कुलिंजन, कचूर, पीपर इनके क्वाथमें सरसोंका तेल और बिजौरेका रस मिलाकर पीनेसे जिह्वाके सब दोष दूर होजातेहैं । जैसे रामचन्द्रजीके स्तुतिपूर्वक नामोच्चारणसे मूकता, झूठ बोलना आदि वाणीके दोष शीघ्र नष्ट होजातेहैं, उसी तरह इस क्वाथके सेवनसे जिह्वक सन्निपात शीघ्र शान्त होजाताहै ॥ ६८ ॥

शालूरपर्णीमालूरमूलामयमधुप्लुताः ॥
शंबूकपुष्पीसहिता सेव्या वाचो विशुद्धये ॥ ६९ ॥

शालूरेति ॥ मालूरमूलं बिल्वमूलम्, आमयः कुष्ठं, मधु सारघं, तैः समन्विता शंबूकपुष्पी शंखपुष्पीसहिता शालूरपर्णी ब्राह्मी वाचोविशुद्धये वाणीप्रकाशाय सेव्या । क्वाथोऽयं मालूरमूलादिभिः प्लुता संयुक्तेति यावत् । शालूरपर्णी सेव्या ब्राह्म्यादीनां चतुर्णां कर्षो मधुना प्लाव्योऽवलेह्यः इति भावः । इति शालूरपर्ण्यवलेहः ॥ ६९ ॥

ब्राह्मी, बिल्वकी जड, कूट, शंखपुष्पी, इनका चूर्ण सहतके साथ चाटनेसे शीघ्र जिह्वाकी शुद्धि होतीहै ॥ ६९ ॥

क्षुद्रानागरपुष्करामृतलताब्राह्मीवचासुव्रता
भार्ङ्गीवासकयासतोयदरसाक्वाथो जयेज्जिह्वकम् ॥
विश्वावर्मविभावरीयुगवरावत्सादिनीवारिद-
व्याघ्रीनिंबपटोलपुष्करजयारुग्दारुभिर्वा कृतः ॥ १७० ॥

क्षुद्रेति ॥ क्षुद्रा व्याघ्री, नागरं शुंठी, पुष्करं पुष्करमूलम्, अमृतलता गुडूची, ब्राह्मी शाल्मलपर्णी, वचा उग्रा, सुव्रता शटी, भार्ङ्गी पद्मा, वासकः आटरूषः, यासो यवासः, तोयदो मुस्ता, रसा रास्ना एतासां क्वाथो जिह्वकं जयेत् । एतस्मिन् श्लोके द्वितीयं वक्ति-विश्वा शुंठी, वर्म पर्पटः. विभावरीद्वयं हरिद्राद्वयं, वरा त्रिफला, वत्सादि गुडूची, मुस्तं व्याघ्री, बृहती, निम्बो नेता, पटोलं तिक्तकं ( परवर ) इति पुष्करमूलं, जया, रुक् कुष्ठं, दारु देवदारु, एतेषां कृतः क्वाथो वा जिह्वकं जयेत ॥ १७० ॥

कटेरी, सोंठ, पहुकरमूल, गिलोय, ब्राह्मी, वच, कचूर, भारंगी, अडूसा, जवासा, मोथा, रासना इन औषधियोंका क्वाथ जिह्वक सन्निपातको दूर करताहै । सोंठ, पित्तपापडा, हलदी, दारुहल्दी, गिलोय, मोथा, कटेरी, नीमकी छाल, परवलके पत्ते, पहुकरमूल, कूट, देवदारु इनका क्वाथ जिह्वक सन्निपातको दूर करताहै ॥ १७० ॥

विषमहौषधमागधिकोषणद्युमणिरक्तकमार्द्रकमर्दितम् ॥
क्रमविवर्द्धितमुद्दलितज्वरस्त्रिपुरभैरव एष रसो वरः ॥ ७१ ॥

कवलग्रहक्वाथावुक्त्वा त्रिपुरभैरवरसं व्याचष्टे विषेति ॥ विषभागः १ महौषधं शुंठी भागौ २ मागधी पिप्पली भागाः ३ उषणं मरिचं भागाः ४ द्युमणिस्ताम्रं भागाः ५ रक्तकं हंसपाकं भागाः ६ क्रमविवर्द्धितं क्रमेण चतुर्थांशेन वर्द्धितम् आर्द्रकरसेन मर्दितं खल्वे मर्दितं भावितम् । वल्लमित एष त्रिपुरभैरवो नाम रसः । किंभूतः उद्दलितो मर्दितो ज्वरो येन सः ज्वरमर्दन इत्यर्थः । एष रसो जिह्वके इतिप्रकरणात् आर्द्रेण वल्लतुल्योऽयं देयस्त्रिपुरभैरव इति तंत्रांतरैर्विशेषः ॥ ७१ ॥

सींगिया १ भाग, सोंठ २ भाग, पीपर छोटी ३, तांबा ४, हंसराज ५ इन औषधियोंको क्रमक्रमसे बढाकर अदरखके रसमें खरलकर पुनः सेवन करनेसे यह त्रिपुरभैरव रस शीघ्रही प्रचण्ड ज्वरको दूर करदेताहै ॥ ७१ ॥

इति जिह्वकप्रतीकार ।

---

अंतर्दाहो दंडपातोन्तकाख्यः
कुंभीपाकः प्रोर्णुनावः प्रलापी ॥
एणीदाहो भूतहासोऽजघोषो
हारिद्रः संशोषिसंन्याससंज्ञौ ॥ ७२ ॥



यंत्रापीडश्चेत्यमी सन्निपाताः
ख्याताः पूर्वं सुश्रुतेन स्वतंत्रे ॥
षड्दोषैर्वा द्व्युल्बणैकोल्बणैश्च
साम्यादेको हीनमध्याधिकैः षट् ॥ ७३ ॥

सन्निपातस्य विकृतिविषमसमवायादनेकप्रकाराः संभवन्तीति सूचयितुं सुश्रुतोक्तानन्तर्दाहादींस्त्रयोदश संन्निपातानाह-अंतर्दाह इति ॥ अमी अंतर्दाहादयः परिगणनात् त्रयोदश सन्निपाताः पूर्वं स्वतंत्रे स्वग्रंथे सुश्रुतेन वृद्धसुश्रुतेन ख्याता उक्तास्तानाह-अंतर्दाहः १ दंडपातः २ अंतकः ३ कुंभीपाकः ४ प्रोर्णुनावः ५ प्रलापी ६ एणीदाहः ७ भूतहासः ८ अजघोषः ९ हारिद्रः १० संशोषी ११ संन्याससंज्ञः १२ यंत्रापीडश्च १३ नन्वेवं केचिदिह संन्निपातानित्याद्युक्तत्रयोदशत्वव्याघात इत्याशंक्याह-षड्दोषैरिति । द्वौ उल्बणौ येषां ते तथा एक उल्बणो येषां ते तथा ततो द्वंद्वः अंतर्दाहादीनां मध्ये इति प्रकरणात् । षड्द्व्युल्बणैरेकोल्बणैश्च दोषैः स्युः तत्र द्व्युल्बणैस्त्रयः, एकोल्बणैस्त्रय इति । एकसाम्यात्समवृद्धेः षट्च हीनमध्याधिकैः वृद्धवृद्धतरे अन्तर्दाहादीनां द्व्युल्बणादिष्वेवांतर्भाव इति भावः । स च न क्रमेण किंतु यथासंभवमभिप्रेतः । एतच्चाग्रे स्फुटीभविष्यति । यत्तु सुश्रुतेन द्व्युल्बणादयोऽपि त्रय आख्याता इति षड्दोषैरित्यर्धस्य व्याख्यानं तत्तु केचिदिहेत्यनेन पौनरुक्त्यादनादरणीयम् ॥ ७२ ॥ ७३ ॥

अन्तर्दाह १ दण्डपात २ अन्तक ३ कुम्भीपाक ४ प्रोर्णुनाव ५ प्रलापी ६ एणीदाह ७ भूतहास ८ अजघोष ९ हारिद्र १० संशोषी ११ संन्यास १२ यंत्रापीड, १३ ये तेरह सन्निपात वृद्ध सुश्रुतने अपने ग्रन्थमें कहेहैं । दो दोषोंकी अधिकतासे तीन और एक दोषकी अधिकतासे तीन इसप्रकार छः हुए । वात, पित्त, कफ, इन तीनोंकी समानतासे एक और हीन मध्य अधिकतासे छः, एवं तेरह प्रकारके सन्निपात कहेहैं ॥ ७२ ॥ ७३ ॥

भवंत्यमी भाग्यविवर्जितस्य नरस्य नूनं मितजीवितस्य ॥
आर्याभिरेषामिह लक्षणानि स्फुटं यथोद्देशमतो वदामि ॥ ७४ ॥

भवंतीति ॥ अमी अंतर्दाहादयः सन्निपाताः भाग्यविवर्जितस्य हतभाग्यस्य मितं स्वल्पं जीवितम् आयुर्यस्य नरस्य नूनं निश्चितं भवंति । अत इह संनिपातप्रकरणे आर्याभिः छंदोविशेषैः एषां रोगाणां लक्षणानि स्फुटं प्रकटं यथोद्देशं समासात् वदामि ॥ ७४ ॥

अन्तर्दाह आदि सन्निपात धनरहित तथा अल्पजीवनवाले पुरुषको निश्चय होतेहैं । इनके लक्षण संक्षेपसे आर्याच्छन्दसे मैं कहताहूं ॥ ७४ ॥

अंतर्दाहः शैत्यं बहिश्च यस्यातिसंततःश्वासः ॥
अंगमिव दग्धकल्पं सोऽन्तर्दाहार्दितः कथितः ॥ ७५ ॥

अंतर्दाहादीनामसाध्यत्वं सूचयन् लक्षणनिरूपणं प्रतिजानीते- अन्तर्दाह इति ॥ अस्य रोगिणः अंतर्मध्ये दाहो भवति अति संततः श्वासो भवति । अंगं शिशिरम् । अंगदग्धकल्पम् ईषद्दग्धमिव भवति । स पुमान् अंतर्दाहार्दितः कथित उक्तः । अंतर्दाहांगदग्धकल्पनाभ्यां बहिः शैत्यश्वासाभ्यां पित्तकफोल्बणायामिति सूचितम् ॥ ७५ ॥

शरीरमें भीतर दाह हो और बाहिर ठंडा शरीर होवे । अत्यन्त श्वास होवे । शरीर जलेहुएके समान जिस पुरुषका हो उसे अन्तर्दाहसे पीडित जानना चाहिये ॥ ७५ ॥

नक्तंदिवं न निद्रामुपैति गृह्णाति मूढधीर्नभसः ॥
उत्थाय दंडपाते भ्रमातुरः सर्वतो भ्रमति ॥ ७६ ॥

नक्तंदिवमिति ॥ दंडो यमदंडः तद्वत्पात आघातो यस्येति योगात् दंडपातसंज्ञे नक्तंदिवम् अहोरात्रं निद्रामुपैति प्राप्नोति । मूढा शून्या धीर्यस्य स सन् नभसः आकाशात् गृह्णाति असदेवोपादत्ते । नभ इति शयनाद्युपलक्षणम् । उक्तं च "शयनाशनकुट्यादिर्यः सदैव जिघृक्षति" इति । भ्रमातुरः सन् उत्थानं कृत्वा सर्वतः इतस्ततः भ्रमति । अत्र वातपित्तोल्बणता निद्रानाशादीनां तज्जन्यत्वात् ॥ ७६ ॥

दण्डपात सन्निपातमें दिन और रात नींद नहीं आतीहै । बुद्धिरहित हुआ, आकाशसे वस्तुओंको लेना चाहताहै । भ्रमसे आतुरहुआ सब तरफ उठ उठकर घूमताहै । यह दण्डपात सन्निपातके लक्षण हैं । इस दण्डपात सन्निपातमें वात पित्तकी अधिकता और कफकी हीनताहै यमके दण्डके समान आघात होनेसे इसको दण्डपात कहतेहैं ॥ ७६ ॥

संपूर्य्यते शरीरं ग्रंथिभिरभितस्तथोदरं मरुता ॥
श्वासातुरस्य सततं विचेतनस्यांतकार्तस्य ॥ ७७ ॥

संपूर्यत इति ॥ यमसदृशत्वादंतकसंज्ञा, तेनार्त्तस्य सततं श्वासातुरस्य श्वासाधिकस्य तथा विचेतनस्य संज्ञारहितस्य, पुरुषस्येति शेषः । तस्य शरीरं ग्रंथिभिः ग्रंथ्याकारैः शोफैः अभितः सर्वतः संपूर्य्यते ।



व्याप्यते । तथा उदरं मरुता वायुना संपूर्य्यते । अत्र ग्रंथिश्वासाभ्यामुदरपूरणविचेतनताभ्यां च कफवातोत्तरता ॥ ७७ ॥

अन्तक सन्निपातसे पीडित पुरुषका सम्पूर्ण शरीर गांठोंसे व्याप्त रहताहै, पेट वायुसे फूलजाताहै, श्वाससे पीडित और चेतनारहित होताहै, इस अन्तक सन्निपातमें वात कफकी अधिकता और पित्त हीन होताहै ॥ ७७ ॥

घोणाविवरवहद्बहुशोणासितनीलशोणितं सार्ति ॥
विलुठनमस्तकमभितः कुंभीपाकेन पीडितं विद्यात् ॥७८॥

घोणेति ॥ घोणाया नासिकाया विवराद् रंध्रात् वहत् श्रवत् बहु शोणम् आरक्तम् असितं कृष्णं नीलं चाषपक्षाभं शोणितं रुधिरं यस्य तं सार्ति दाहपीडासहितम् एतेन पित्तोल्बणता । तथा विलुठन् विवर्त्तमानो मस्तको यस्य तादृशं नरं कुंभीपाकेन सन्निपातेन पीडितं विद्यात् जानीयात् ॥ ७८ ॥

नाकके छिद्रसे थोडा लाल काला नीला रुधिर ( खून ) बहताहो दाह और पीडा सहित हो मस्तकको चारों तरफ फेंकताहो उस पुरुषको कुम्भीपाकसे पीडित जानना चाहिये । इसमें वात पित्त अधिक कफ हीन होताहै ॥ ७८ ॥

उत्क्षिप्य यः स्वमंगं क्षिपत्यधस्तान्नितांतमुच्छ्वसति ॥
तं प्रोर्णुनावजुष्टं विचित्रकष्टं विजानीयात् ॥ ७९ ॥

उत्क्षिप्येति ॥ यः स्वमङ्गं उत्क्षिप्य उत्थाप्य अधस्तात् भूमौ क्षिपति । नितांतं निरंतरं उत् ऊर्द्ध्वं श्वसिति । विचित्रं कंठरोधादिकं कष्टं यस्य तादृशं तं नरम् । एतेन कफोल्बणता तं प्रोर्णुनावेन सन्निपातेन जुष्टं संबद्धं विजानीयात् ॥ ७९ ॥

जो पुरुष अपने शरीरको उठाकर पृथिवीपर फेंकताहै और निरन्तर ऊपरको श्वास लेताहो कण्ठ रुकना आदि अनेक दुःखोंसे दुःखित पुरुषको प्रोर्णुनाव सन्निपातसे ग्रसित जानना चाहिये इसमें कफ उल्बण वात मध्यम, पित्त हीन होताहै ॥ ७९ ॥

स्वेदभ्रमांगमर्दाः कंपवमीदवथवो व्यथाः कंठे ॥
गात्रं च गुर्वतीदं प्रलापिजुष्टस्य जायते लिंगम् ॥१८०॥

स्वेदेति ॥ स्वेदः प्रस्वेदः, भ्रमः भ्रमणम्, अंगमर्दोंगस्फुटनिका, कंपो वेपथुः, वमी वमनं, दवथुर्दाहः, कंठे व्यथा रोहिण्यादिका अवरुद्धव-

त्पीडा च । गात्रं शरीरं चातिगुरु भवति । एताभ्यां कफोल्बणता इदं लिंगं चिह्नं प्रलापिना संनिपातेन जुष्टस्य जायते । अयं च प्रलापो विद्यते यस्मिन्निति योगात् । स्वेदभ्रमदाहैश्च पित्तमध्यता परिशेषाद्वातहीनता ॥ १८० ॥

प्रलापी सन्निपातसे पीडित मनुष्यके पसीना, भ्रम, अंग टूटना, कांपना, वमन, दाह, कण्ठमें पीडा शरीर अत्यन्त भारी ये लक्षण होतेहैं । इसमें कफ उल्बण, पित्त मध्यम और वात हीन है ॥ १८० ॥

परिधावतीव गात्रे रुक् पात्रे भुजगपतंगहरिणगणः ॥
वेपथुमतः सदाहस्यैणीदाहज्वरार्त्तस्य ॥ ८१ ॥

परिधावतीति ॥ वेपथुमतः वेपथुः कंपः तद्युक्तस्य सदाहस्य दाहेन सह वर्त्तमानस्य एणीदाहाख्येन ज्वरेण प्रकरणात्सांनिपातिकेन आर्तस्य पुंसः एतेन पित्तमध्यता रुजां तोदभेदादीनां पात्रे आधारभूते गात्रे भुजगादीनां पतंगादीनां पक्षिणां हरिणानां च गणः समूहः परिधावतीव । एतेन वाताधिकता परिशेषात्कफहीनता च ॥ ८१ ॥

कम्प तथा दाह युक्त एणीदाहसे पीडित पुरुषको तोदभेदादि पीडाओंके आधारभूत अपने शरीरमें सर्प, पतंग, हिरण भागतेहुए माळूम होतेहैं । इस एणीदाह सन्निपातमें वात अधिक, पित्त मध्यम, कफ हीन है ॥ ८१ ॥

शब्दादीनधिगच्छति न स्वान्विषयांस्तथेन्द्रियग्रामः ॥
हसति प्रलपति पुरुषः स ज्ञेयो भूतहासार्त्तः ॥ ८२ ॥

शब्दादीनिति ॥ यस्य पुरुषस्य इन्द्रियाणां श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानां ग्रामः समूहः शब्दादीन् शब्दस्पर्शरूपरसगंधान् स्वविषयान नाधिगच्छति न गृह्णाति एतेन वातोल्बणता । कर्णाभ्यां शब्दं, त्वचा स्पर्शं, चक्षुर्भ्यां रूपं, जिह्वया रसं, घ्राणेन गंधं न-जानाति यश्च रूपं दुःश्रवं यथा स्यात्तथा हसति, प्रलपति, स पुरुषः भूतस्य हास इव भूतस्येव वा हासो यस्येत्यन्वर्थात भूतहाससंज्ञेन सन्निपातेन आर्तो ज्ञेयः ॥ ८२ ॥

इन्द्रियोंका समूह श्रोत्र, त्वचा, चक्षु, जिह्वा, घ्राण, अपने अपने शब्दादि विषयोंको ग्रहण न करते हों । अर्थात् श्रोत्र शब्द, त्वचा स्पर्श, चक्षु रूप, जिह्वा रस, घ्राण गंधको ग्रहण न करतीहो, हँसता हो प्रलाप करता होय उस पुरुषको भूतहास सन्निपातसे पीडित जानना चाहिये ॥ ८२ ॥



छगलकशरीरगंधः स्कंधरुजावान्निरुद्धगलरंध्रः ॥
अजघोषसन्निपातादाताम्राक्षः पुमान् भवति ॥ ८३ ॥

छगलकेति ॥ छगलकस्य कुत्सितछागस्य शरीरगन्धवद्गंधो यस्य तादृशः । कुत्सायां कन् । स्कन्धयो रुजा पीडा विद्यते यस्य तद्वान् । तथा आताम्रे अक्षिणी यस्य तादृशः । आभ्यां च वातमध्यता । निरुद्धम् अर्थात्कफेनावरुद्धं गलरंध्रं यस्य । एतेन कफोल्बणता विगंधत्वात्परिशेषाच्च पित्तहीनता । विरुद्धगलत्वात् अजवत् घोषः शब्दो यस्येतियोगात् यदृच्छासंकेताद्वा अजघोषसंनिपातात् पुमान् एवंविधो भवति॥८३॥

अजघोष सन्निपातसे बकरेके शरीरकी गंधके समान शरीरमें गन्ध, कन्धोंमें दर्द, गलेके छिद्रोंका रुकना, लाल नेत्र इन लक्षणोंयुक्त पुरुष होताहै ॥ ८३ ॥

यस्यातिपीतमंगं नयने सुतरां मलास्ततोऽप्यधिकम् ॥
दाहोतिशीतता बहिरस्य स हारिद्रको ज्ञेयः ॥ ८४ ॥

यस्येति ॥ यस्य पुरुषस्यांगम् अतिपीतं हरिद्राभं नयने नेत्रे सुतराम् अत्यर्थम् अंगापेक्षयाऽतिपीते भवतः, मलमूत्रादयस्ततो नयनतोऽपि अधिकं पीता भवंति। दाहोऽत्राऽऽभ्यंतर एतेन पित्तोल्बणता। बहिः त्वचायां शीततया च परिशेषाद्वातहीनता । अस्य तस्य पुंसः स हारिद्रं करोतीति ॥ ८४ ॥

जिस पुरुषका शरीर अत्यन्त पीला हल्दीके समान है, शरीरसे अधिक पीले दोनों नेत्र और नेत्रोंसे भी अधिक पीले विष्ठा, मूत्र स्वेदादि हों अन्तर्दाह होय, बाहिरसे शरीर ठंडा हो उस पुरुषको हारिद्रसन्निपातसे ग्रसित जानना चाहिये ॥ ८४ ॥

मेचकवपुरतिमेचकलोचनयुगलोऽबलो मलोत्सर्गात् ॥
संशोषिणि सितपिडिकामंडलयुक्तो ज्वरे भवति ॥ ८५ ॥

मेचकवपुरिति ॥ समंताच्छोषतातियोगात्संशोषणि ज्वरे पुमान् एवंविधो भवति । किंभूतः । मलोत्सर्गात् अतिप्रवृत्तेरबलो बलहीनः । पुनः किंभूतः । सितैः पिडिकामंडलैर्युक्तः । अत्र मेचकेत्यनेन वातस्य मलोत्सर्ग इत्यनेनापि तस्य मितेत्यनेन कफस्योल्बणस्य चोल्बणता सूचिता ॥८५॥

संशोषि सन्निपातज्वरमें काला शरीर और अत्यन्त काले दोनों नेत्र, विष्ठाकी अत्यन्त प्रवृत्तिसे बलहीन और सफेद फुंसियोंके मण्डल इन लक्षणयुक्त पुरुष होताहै ॥ ८५ ॥

अतिसरति वमति कूजति गात्राण्यभितश्चिरं नरः क्षिपति ॥
संन्याससन्निपाते प्रलपति भुग्नाक्षिमंडलो भवति ॥ ८६ ॥

संन्यासनामानं सन्निपातं वक्ति-अतिसरतीति ॥ समंततो न्यासयति नितरां क्षेपयति गात्राणीति योगात्संज्ञा । संन्यास एव सन्निपाते नरः अति अत्यंतं सरति, वमति वमनं करोति, कूजति कफावरुद्धकंठत्वादव्यक्तं शब्दं करोति, अभितो द्वयोः पार्श्वयोरिति यावत्, गात्राणि चिरं बहुकालं क्षिपति अधः पातयति, प्रलपति मृषा वदति, भुग्नं वक्रम् अक्षिमंडलं यस्य स वक्रनेत्र एवंविधो नरो भवति । अत्र च अतिसरतीत्यनेन पित्तहीनता, वमति कूजतीति कफमध्यता, शेषैश्च वातोल्बणता ज्ञेया ॥ ८६ ॥

संन्यास सन्निपातमें दस्त और वमन होतेहैं । कफसे कण्ठ रुकनेसे अव्यक्त शब्द बोलताहै । शरीर बहुत देरतक चारों तरफको फेंकता है, बडबडाताहै, नेत्रोंके मण्डल टेढे होजातेहैं । इस संन्यास सन्निपातमें वात उल्बण, कफ मध्यम और पित्तकी हीनताहै ॥ ८६ ॥

यन्त्रापीड ।

येन मुहुर्ज्वरवेगाद्यंत्रेणेवावपीड्यते गात्रम् ॥
रक्तं पीतं च वमेद्यंत्रापीडः स विज्ञेयः ॥ ८७ ॥

येनेति ॥ येन सन्निपातेन मुहुर्वारंवारं ज्वरस्य संतापस्य वेगात् वेगं कृत्वा । ल्यब्लोपे पंचमी । गात्रं शरीरं यंत्रेण तिलादिपीडनयंत्रेणेव अवपीड्यते । रक्तमारक्तं पीतं च वमेत्, पुमानित्यर्थात् । सः यंत्रवत् आपीडयतीति योगाद्यंत्रापीडो विज्ञेयो ज्ञातव्यः । अत्र चावपीड्यत इत्यनेन वातमध्यता शेषेण पित्तोल्बणता परिशेषात्कफहीनतेति ध्येयम् ॥ ८७ ॥

जिस सन्निपातसे वारम्वार ज्वरके सन्तापके वेगसे तिलादिकोंसे तेल निकालनेके यन्त्रके समान अपने शरीरको तोडता हो, लाल पीला वमन करताहो उसको यन्त्रापीड सन्निपातसे पीडित पुरुष जानना चाहिये । इसमें पित्तउल्बण, वात मध्यम, कफ हीन होताहै ॥ ८७ ॥

नारायण एव भिषग्भेषजमेतेषु जाह्नवीतोयम् ॥
नैरुज्यहेतुरुच्चैर्नित्यं मृत्युंजयो ध्येयः ॥ ८८ ॥

अंतर्दाहादीनामप्रतीकार्यत्वं पर्यायोक्त्या द्रढयति-नारायण इति ॥ एतेषु उपसन्निपातेषु अंतर्दाहादिषु त्रयोदशसु भिषक् वैद्यो नारायणः



श्रीकृष्ण एव, भेषजं जाह्नवीतोयं गंगाजलम् उच्चैरधिकं नित्यं सर्वकालं मृत्युंजयो रुद्रो ध्येयो ध्यातव्यः । किंभूतः । रुक् रोगो रुग्भयत्वात्संसारश्च रुजो निष्क्रांतो नीरुक् नीरुजो भावः नैरुज्यं रोगरहितत्वं तस्य हेतुरिति । नारायणादित्रयविशेषणम् एषामचिंत्यमहिमत्वात्र रोगत्वमपि संभवेत् । स्मरणे च पुनर्न संसार इति इदमेव विधेयमिति तात्पर्यम् ॥ ८८ ॥

इन अन्तर्दाहादि तेरह सन्निपातोंमें श्रीकृष्ण ही वैद्यराज हैं और श्रीगंगाजी ही औषधी हैं, सम्पूर्ण समयमें नित्य शिवजीका स्मरण करना ही निरोगताका कारण है । क्योंकि शिवजी निरोगता देनेवाले हैं । इन तीनोंके अचिन्त्य प्रभावसे या तो रोग दूर होही जावे, नहीं तो अन्तसमयमें इनके पुण्यशाली स्मरणसे मनुष्य पुनर्जन्मरहित होताहै । क्योंकि "अन्ते मतिः सा गतिः" यह सिद्धान्त है ॥ ८८ ॥

निदानत्रयं यत्र जागर्त्ति सम्यङ्
न चेयर्ति शं यत्र चण्डा हृदर्तिः ॥
श्वसन्वक्रतो रक्तदृग्घृष्टरोमा
नरोमासमर्द्धं न जीवत्यनेन ॥ ८९ ॥

इदानीं श्लोकचतुष्टयेन ज्वरमात्रस्यासाध्यलक्षणान्याह-निदानत्रयमिति ॥ यत्र ज्वरे निदानानां व्याधिनिश्चयकारणानां त्रयं हेतुपूर्वरूपाख्यं सम्यक् समास्त्येन जागर्ति प्रकटीभवति । अनेन नरोऽर्द्धमासं न जीवति। यत्र नरः शं सुखं न इयर्त्ति न प्राप्नोति, केनाप्युपायेनेत्यर्थात् अर्द्धमासमित्यादि सर्वत्र संबध्यते । यत्र चंडा अतिदुःसहा हृदः अर्तिः अष्ठीलिकाद्या जागर्ति वक्रतो मुखतः श्वसन् श्वासं मुञ्चन् रक्तदृक् रक्तनेत्रः, हृष्टरोमा हर्षितरोमा नरः अनेन मासमर्द्धं न जीवति ॥ ८९ ॥

जिस ज्वरमें हेतु, पूर्वरूप, रूपके लक्षण सम्पूर्ण हों तो वह पन्द्रह दिन नहीं जीताहै जिस ज्वरमें किसी औषधिसे रोगीको सुख न मिलताहो वह भी पन्द्रह दिन तक नहीं जीताहै और हृदयमें अत्यन्त पीडा हो मुखसे श्वास जल्दी जल्दी लेताहो, लाल नेत्र हों, रोमाञ्च खडे होंय तो वह मनुष्य भी पन्द्रह दिन नहीं जीताहै ॥ ८९ ॥

अतितमःप्रविशंतमहर्निशं भृशमनच्छदृशं सुतरां कृशम् ॥
नरमजागरमूढधियं ज्वरः स्वतरसाऽऽशु तपत्ययमत्ययम् ॥ १९० ॥

अतितम इति ॥ अयं ज्वरः स्वस्य तरसा वेगेन आशु शीघ्रं नरं अत्ययं नाशं नयति । किं भूतं नरम् । अहर्निशमहोरात्रं भृशमतिशयेन अतितमसि गाढांधकारे प्रविशंतं प्रविष्टमिवात्मानं मन्यमानम् । अतिमोहं प्राप्नुवंतं वा । पुनः किंभूतम् । अनच्छे मलिने दृशौ यस्य तम् । तथा अजागरेणातिनिद्रया मूढा उपहता धीर्यस्य तादृशम् । असंज्ञमिति यावत । पुनः किंभूतम् सुतरां कृशमतिदुर्बलम् ॥ १९० ॥

यह ज्वर दिन और रातमें अत्यन्त घोर अन्धकारमें घुसेहुएके समान अपनी आत्माको जाने, मलीन नेत्र तथा दुर्बल, निद्रारहित, नष्टबुद्धिवाले मनुष्यको यह ज्वर अपने वेगसे शीघ्र ही मारता है ॥ १९० ॥

प्रतिहतप्रभमिन्द्रियमंडलं सृजति नुर्ननु यो निजतेजसा ॥
अथ गभीरचयः खरवेगवान् प्रवरमाहुरसाध्यमिमं ज्वरम्॥९१

प्रतिहतेति ॥ नन्वतिनिश्चयेन यो ज्वरो निजतेजसा स्वबलेन नुः मनुष्यस्य इंद्रियमंडलम् इंद्रियाणां श्रोत्रादीनां मंडलं ग्रामं प्रतिहता कुंठिता प्रभा शक्तिर्यस्य तत सृजति करोति इमं ज्वरम्-असाध्यमाहुः । अथ चयः गंभीरं चरति अंतर्धातुग इति यावत । गंभीरमिव चरतीति वा । ईदृशः सन प्रवरमत्युत्कटं यथा स्यात्तथा खरो अतितीव्रो वेगो विद्यते यस्य तद्वान् भवति । इमं असाध्यमाहुः ॥ ९१ ॥

जो ज्वर अपने वेगके बलसे मनुष्यके चक्षुरादिक इन्द्रियमण्डलको शक्तिरहित करताहो ( आंखोंसे न दीखना, कानोंसे न सुनना इत्यादि ) उस ज्वरको असाध्य जानना चाहिये । अथवा जो ज्वर धातुओंमें लीन होगयाहो अत्यन्त प्रचण्ड वेग होताहो उस ज्वरको भी आचार्योंने असाध्य कहाहै ॥ ९१ ॥

चिरज्वरः श्वासतमः प्रलापभ्रमक्लमापत्परिपीडितांगम् ॥
निहंति नूनं नरमल्पवह्निमांसासृगोजस्कमथातिशूनम् ॥९२॥

चिरज्वर इति ॥ चिरमनुवर्त्तमानो ज्वरो नरं मनुष्यं नूनं निहंति । किंभूतम् । श्वासादीनामापद्भिर्वेदनाभिः परिपीडितम् अंगं यस्यासौ तम् । अथ च अल्पानि वह्न्यादीनि यस्य तम् । तत्र ओजो बलं धातुतेजो वा, तादृशं निहंति । अथ च अतिशूनं अतिशयेन शोफवतं निहंति॥९२॥

बहुत दिनोंका ज्वर अत्यन्त श्वास, प्रलाप, भ्रम, खेद, अनेक प्रकारकी पीडाओंसे पीडित शरीरवाले, तथा मन्दाग्नि अल्प मांस रक्त ओज, अत्यन्त सूजनवाले मनुष्यको निश्चय मारलेता है ॥ ९२ ॥



प्राकृतो वैकृतः सौम्यस्तीक्ष्णः सामो निरामकः ॥
अंतर्वेगो बहिर्वेगः साध्योऽसाध्य इति द्विधा ॥ ९३ ॥

इदानीं वातजादिज्वराणां पंचभिः प्रकारैर्द्वैविध्यमाह-प्राकृतेति ॥ प्राकृतः १ । वैकृतः २ । सौम्यः ३ । तीक्ष्णः ४ । सामः ५ । निरामकः ६। अंतर्वेगः ७ । बहिर्वेगः ८ । साध्यः, असाध्य इति द्विधा द्विभेदः ॥ ९३ ॥

प्राकृत, वैकृत, सौम्य, तीक्ष्ण, सामज्वर, निरामज्वर, अन्तर्वेग, बहिर्वेग, साध्य, असाध्य इस तरहसे ज्वर दो प्रकारका है ॥ ९३ ॥

प्रावृषि पवनः कुर्याच्छरदि च पित्तं मधौ कफः कुपितः ॥
ग्रीष्मे वर्षासु हिमे क्रमेण निचिता ज्वरं घोरम् ॥ ९४ ॥

पंचभिः क्रमेण लक्षयति-प्रावृषीति ॥ अग्रिमश्लोके अयमिति निर्देशात यमिति लभ्यते । प्रावृषि वर्षाकाले कुपितः स्वस्थानादुन्मार्गगामी पवनः, शरदि कुपितं पित्तं, तथा मधौ वसंते कुपितः कफश्च यं ज्वरं कुर्यात अयं प्राकृत उदितः, एतेन यथर्तु कुपितो दोषः प्रकृतिस्तद्भवत्वं प्राकृतत्वमित्युक्तम् । ग्रीष्मे वायुः संचितः । वर्षासु पित्तं संचितम् । हिमे कफः संचितः । क्रमेण निचिताः स्वस्वस्थाने प्रवृद्धाः । अत्र घोरमिति विशेषणं पवनोऽयं ज्वरमित्यत्रैव संबध्यते नतु पित्तं कफश्चेत्यत्र तत्तज्वरयोर्व्याधिमहिम्ना सुखसाध्यत्वेन घोरत्वाभावात् ॥ ९४ ॥

प्रावृट् ऋतुमें वायु, शरदमें पित्त, वसन्तमें कफ कुपित होकर जिस ज्वरको पैदा करतेहैं वह प्राकृतज्वर कहलाताहै । ग्रीष्ममें वायु, वर्षामें पित्त, और हेमन्तमें कफ संचित होकर घोर ज्वरको पैदा करताहै ॥ ९४ ॥

प्राकृतोऽयमुदितो विपर्ययाद्वैकृतः स तु मृदुर्व्युपद्रवः ॥
सौम्यसंज्ञ उरुवेगवेदनस्तीक्ष्ण इत्यभिहितो भिषग्वरैः ॥९५॥

प्राकृत इति ॥ वार्षिकस्यापि कथं घोरत्वमिति वाच्यं "वैकृतोऽन्यः स दुःसाध्यः प्रायशः प्राकृतोऽनिलात् ॥" इत्यनेन दुःसाध्यत्वोक्तेः । विपर्ययादुक्तवैपरीत्यात् वैकृतः । एतेन अयथर्तूचितकुपितदोषजत्वं वैकृतत्वमित्युक्तम् । यस्तु मृदुः अल्पवेगवेदनः व्युपद्रवः वक्ष्यमाणमूर्च्छाद्युपद्रवरहितः स ज्वरः सौम्यसंज्ञो भवति । य उर्व्यौ महत्यौ वेगवेदने यस्य । वेदनेति मूर्छाद्युपद्रवाणामुपलक्षणं तादृशस्तीक्ष्णो भिषग्वरैर्वैद्यश्रेष्ठैरिति अभिहितः कथितः ॥ ९५ ॥

यह प्राकृत ज्वर कहाहै और इसके विपरीत अयथर्तु जैसे शरद ऋतुमें पित्तज्वर प्राकृत है, परन्तु शरदमें ही वात और कफज्वर वैकृत कहाजाताहै । अल्पवेगयुक्त ज्वर मूर्च्छा आदि उपद्रव रहित ज्वर सौम्य कहाजाताहै । प्रचण्डवेग और प्रचण्ड मूर्छा आदि वेदनायुक्त ज्वरको वैद्यवरोंने तीक्ष्णज्वर कहाहै ॥ ९९ ॥

तंद्रारत्यरुचिप्रसेकहृदयोद्वेष्टातिमूत्रस्रुति-
स्वेदाभावविबंधवह्निमृदुतालस्याविपाकादिभिः ॥
स्वापस्तंभमुखाविशुद्धिगुरुतातापैश्च सामः स्मृतः
सर्वोऽपि ज्वर एवमादिरहितः पक्वो निरामश्च सः ॥ ९६ ॥

तंद्रेति ॥ तंद्राऽऽदयो येषां तैः । तंद्रा प्रमीला, अरतिरसंतोषः, अरुचिररोचकं, प्रसेको लालास्रावः, हृदयस्य उद्वेष्टनवद्वेदनाविशेषः, अतिमूत्रस्रुतिरतिमूत्रस्रावः, स्वेदाभावश्च यथासंभवः वातकफज्वरादावुक्तेः । विबंधो विशो वह्नेर्मृदुता अग्निमान्द्यम् आलस्यम् अविपाकः दोषपाकाभावः । आदिशब्दात्स्थूलांगगुरुतादीनि । स्वापादिभिश्च-तत्र स्वापो निद्राधिक्यं स्पर्शाज्ञानमिति कश्चित् । स्तम्भो गात्रस्य स्तब्धता, मुखाविशुद्धिः, गुरुता गात्राणां, तापः संतापः, एतैश्चिह्नैः सामज्वरः स्मृतः । एवमादिभिः पूर्वोक्तैस्तंद्रादिभी रहितः ज्वरः पक्वः सन् निरामः स्मृतः ॥ ९६ ॥

तन्द्रा, असन्तोष, अरुचि, मुखसे जलका झरना, हृदयमें पीडा, अत्यन्त मूत्रस्राव, पसीनेका न आना, विष्ठाका, रुकना, अग्नि मंद होना, आलस्य, दोषोंका परिपाक न होना आदिशब्दसे शूल शरीरमें भारीपन इत्यादि लक्षण और नींद अधिक आना, गात्र जिकडना, मुख बिगडा हुआ शरीरमें भारीपन, सन्ताप ये लक्षण सामज्वरके कहेहैं । और तन्द्रा आदि सम्पूर्ण लक्षण रहित परिपक्व दोषवाला ज्वर निराम ज्वर कहाहै ॥ ९६ ॥

अंतर्वेगिन्युग्रतमस्तृट्क्लमदाहाः
श्वासाधिक्यं शूलरुजः स्वेदविनाशः ॥
मिथ्यावाक्त्वं दोषमलस्तंभनमुच्चै-
रेते रोगा नैव बहिर्वेगिनि नूनम् ॥ ९७ ॥

अंतर्वेगिनमाचष्टे-अंतर्वेगिनीति ॥ अंतर्मध्ये ज्वरस्य वेगो गतिर्यस्यासौ तस्मिन् अंतर्वेगिनि ज्वरे उग्रतमःप्रभृतयो भवंति । उग्रेति दाहादीनां विशेषणम् । उग्रं तमः अन्धकारम्, उग्रा तृट् तृषा, क्लमः ग्लानिः, उग्रो दाहः संतापः, श्वासाधिक्यं श्वासबाहुल्यं, शूलम् उदरे रुजस्तोदभेदादयः, स्वेदविनाशः स्वेदाभावः, मिथ्या वाक् उच्चैरत्यर्थं दोषस्य वातादेः, मलस्य पुरीषादेश्च स्तंभनं पाकाभावोऽप्रवृत्तिश्च । एते उग्रतमःप्रभृतयो रोगाः बहिः रसादिबहिर्धातुषु ज्वरस्य वेगो गतिर्यस्य तस्मिन्बहिर्वेगिनि ज्वरे नैव स्युः ॥ ९७ ॥



अन्तर्वेग ज्वरमें अत्यन्त अन्धकार प्रसित मनुष्य होताहै अत्यन्त प्यास क्लम दाह होताहै । श्वासकी अधिकता, पेटमें दर्द, तोदभेदादिपीडा, स्वेदका अभाव, झूंठ बोलना, वातादिदोषोंका परिपाक न होना, मलका रुकना ये लक्षण होतेहैं । और बहिर्वेग ज्वरमें ये लक्षण नहीं होतेहैं॥९७॥

दोषपाकेऽल्पलिंगश्च साध्यः स्यान्निरुपद्रवः ॥
धातुपाके ज्वरेऽसाध्यो भूर्युपद्रवसंयुतः ॥ ९८ ॥

दोषपाक इति ॥ दोषपाकधातुपाकश्च वक्ष्यमाणः । दोषपाके अल्पलिंगः अल्पचिह्नः ज्वरादीनामल्पलिंगत्वात्साध्यः उपद्रवरहितः स्यात् । धातुपाके ज्वरे अतिभूरिणो ये उपद्रवास्तैः संयुक्तः सहितः असाध्यः । अत्र तंत्रांतरोक्तो विशेषः "ज्वरः पूर्वाह्णिको यस्य शुष्ककासश्च दारुणः॥ बलमांसविहीनश्च यथा प्रेतस्तथैव सः । सहसा ज्वरसंतापस्तृष्णामूर्च्छाबलक्षयः । विश्लेषणं च संधीनां मुमूर्षो रूपमीदृशम्" इत्यादि ॥ ९८ ॥

दोषपाकमें ज्वरके थोडे लक्षण होतेहैं, उपद्रव रहित होताहै इससे दोषपाकी ज्वर साध्य है । धातुपाकमें ज्वरके बहुत उपद्रव होतेहैं इससे धातुपाकी ज्वर असाध्य है ॥ ९८ ॥

दोषपाकके लक्षण ।

शश्वद्धीन्द्रियपंचकस्य पटुता वह्नेश्च यत्र क्रमा-
त्तृष्णादिप्रशमाज्ज्वरस्य मृदुता तं दोषपाकं वदेत् ॥
हृन्नाभ्योरतिवेदनातिसरणं तीव्रोज्वरस्तृट् तमः
श्वासाधिक्यमरोचकोरतिरिति स्याद्धातुपाकाकृतिः ॥९९॥

साध्यासाध्यावुक्त्वा दोषपाकधातुपाकौ व्यनक्ति-शश्वदिति ॥ यत्र रोगे शश्वन्निरंतरं धी बुद्धिः इंद्रियपंचकं श्रोत्रादिपंचकं, धीश्च इंद्रियपंचकञ्च धीन्द्रियपंचकं तस्य पटुता पाटवं, वह्नेर्जाठराग्नेः पटुता च क्रमात् तृष्णादिप्रशमात् तृष्णादीनां प्रशमान्नाशाद्धेतोः ज्वरस्य मृदुता अल्पवेगता भवति तं दोषपाकं वदेत्कथयेत् "सहसा जायते यस्य विकारः सर्वलक्षणः ॥ निवर्त्तते च सहसा सहसा स विनश्यति" इत्यरिष्ट-

रूपसहसाप्रशमव्यवच्छेदाय क्रमादिति धातुपाकं वक्ति हृन्नाभ्योरिति। हृदये नाभौ च अतिवेदना अत्यंतपीडा अतिसरणं अतीसारस्तीव्रज्वरस्तृट् तृषा, तमो ग्लानिः, श्वासस्याधिक्यं बाहुल्यम्, अरोचकः अरुचिः, अरतिरनवस्थचित्तता इति धातुपाकस्य आकृतिः स्यात् । इति प्रकारार्थः, तेनोत्तरोत्तररोगवृद्धिबलहानिमज्जशुक्रसहितमूत्रप्रवृत्त्यादीनां संग्रहः। धातूनामाभ्यंतराणां पाक इति योगाद्धातुपाकः ॥ ९९ ॥

जिस रोगमें बुद्धि और श्रोत्र चक्षुरादि पांचों इन्द्रियें अपने अपने विषयोंको अच्छीतरह निरन्तर ग्रहण करैं अग्नि भी तीव्र हो क्रमसे प्यास आदि उपद्रव शान्त होजावें, ज्वरका भी अल्प वेग हो तो दोष वातादिकोंकी परिपक्वता जानना । और हृदय नाभिमें अत्यन्त पीडा, अतीसार, प्रचण्ड ज्वर, प्यास ग्लानि श्वासकी अधिकता, अरुचि, बेचैनी ये धातुपाकके लक्षण हैं ॥ ९९ ॥

केचिदिह संततादिप्रभेदतः पंचधा ज्वरं प्राहुः ॥
संततसततान्येद्युस्तृतीयकचतुर्थकास्ते च ॥ २०० ॥

ज्वरविषमतामाह-केचिदिति ॥ इह ज्वरप्रकरणे केचिदाचार्याः संततादिप्रभेदतः पंचधा ज्वरं प्राहुः । ते के पंचप्रकाराः संततः सततः अन्येद्युस्तृतीयकश्चतुर्थक इति ॥ २०० ॥

कोई कोई आचार्य सन्ततादि भेदसे पांच प्रकारके ज्वर कहतेहैं । वे यह हैं-सन्तत १, सतत २, अन्येद्यु ३, तृतीयक ४, चातुर्थक ५ ॥ २०० ॥

निजैर्निमित्तैरनिलादयोति
दुष्टाः स्वदूष्यादिसखा रसस्थाः ॥
व्यरातयो व्याप्य समस्तमंगं
कुर्युर्ज्वरं संततमात्मलिंगम् ॥ १ ॥

तत्र तावत्संततस्य संप्राप्तिमाह-निजैरिति ॥ निजैर्निमित्तैः स्वकीयैः कारणैः कृत्वा अतिदुष्टा अतिकुपिता अनिलादयो वातादयो दोषा रसस्थाः संतः विशेषेणेति विशेषः । अन्यथा रसस्थिते ज्वरमात्रे सत्त्वादिविशेषानुपपत्तिः । अत एव समस्तमंगं व्याप्य आत्मना लिंगानि यस्मिन् सर्वदोषलिंग इति यावत् । ईदृशं सततं ज्वरं कुर्युः । ननूक्तसन्निपातेऽपीयमेव संप्राप्तिरिति को विशेष इति अनिलादीन्विशिनष्टि स्वानि दूष्यादीनि सखायः सहाया येषां ते तथा । स्वदूष्यादिभिः कृतसाहाय्या इत्यर्थः । आदिपदेन देशकालप्रकृतयः तत्र वायोरस्थिपित्तस्य स्वेदरक्ते कफस्य च रसमांसमेदोमज्जशुक्रमूत्रशकृदोजांसि दूष्याणि । कालस्तु प्रावृषि पवन इत्यादिनोक्तः । ननु स्वदूष्यादिसाहाय्यं कदाचित्कस्यचिदेव न तु युगपत्सर्वेषां संभवति । तथाहि अस्थिनि दूष्ये वर्षाकाले जांगले देशे वातप्रकृतेः संततः ज्वरो वातस्यैव न कफपित्तयोः । तथा रक्ते दूष्ये शरदि अम्ललवणबहुले आनूपे पित्तप्रकृतेः पित्तस्यैव न वातकफयोः । तथा रसादौ दूष्ये वसंते मधुरप्रीतेः कफप्रकृतेः कफस्यैव न वातपित्तयोः । अयमाशयः, ये दूष्यादयो यं दोषं प्रत्यस्वकीयास्तेऽपि बलवता तेन दोषेणानुग्रहीताः संतो विरुद्धार्थकरणाशक्तत्वादस्यानुगुणा भवंति ॥ १ ॥



अपने अपने कारणोंसे अत्यन्त कुपित हुए वात, पित्त, कफ रसमें स्थित होकर अपने अपने दूष्य तथा आदिशब्दसे देश, काल, प्रकृतिकी सहायता लेकर सम्पूर्ण शरीरमें व्याप्त होकर अपने अपने लक्षणयुक्त सन्ततज्वरको पैदा करतेहैं । दूषित होनेयोग्यको दूष्य कहतेहैं वे दूष्य रस रक्तादि हैं-जैसे वायुका दूष्य अस्थि और पित्तका रक्त और कफका रक्त, मांस, मेद, मज्जा, शुक्र, विष्ठा ओज हैं । वायुका प्रावृट्, पित्तका शरद्, कफका वसन्त कालहै । स्वदूष्यादिकोंकी सहायता कभी किसीकी होतीहै एक साथ सबोंकी नहीं होती । जैसे-अस्थि दूष्य होनेपर वर्षाकालमें जांगल देशमें वातप्रकृतिवाले पुरुषका वातका ही सन्तत ज्वर होगा । पित्त और कफका नहीं होसक्ताहै । इस प्रकार रक्त दूष्य होनेपर शरद् ऋतुमें आनूप देशमें पित्तप्रकृतिवाले पुरुषको पित्तका ही सन्तत ज्वर होगा । एवं रसादि दूष्य होनेपर वसन्त ऋतु आनूपदेश कफ प्रकृतिवाले पुरुषको कफकाही सन्तत ज्वर होगा । वातपित्तका नहीं होगा ॥ २०१ ॥

सप्तभिरहोभिरनिलादशभिः पित्तात्प्रशांतिमुपयाति ॥
द्वादशभिश्चबलासाद्रसादिशुद्ध्यान्यथा हंति ॥ २ ॥

वातपित्तश्लेष्मणां मात्रामाह-सप्तभिरिति ॥ अनिलाज्जातः सः संततज्वरः सप्तभिर्दिवसैः, पित्ताजातः दशभिर्दिनैः, बलासात्कफाज्जातः द्वादशभिर्दिनैः, रसादिशुद्ध्या प्रशांतिमुपयाति नश्यति । अन्यथा हंति । यदि चेदस्य शुद्धिर्न भवति तदा हंतीत्यर्थः ॥ २ ॥

वातज्वरकी मर्यादा सात दिन और पित्तकी दश दिन और कफकी बारह दिनकी है रसादिकोंकी शुद्धिसे दोष अपनी अपनी मर्यादमें शान्त होजातेहैं और रसादिकोंकी अशुद्धिसे पुरुषके कुपित हुए दोष मारदेते हैं ॥ २ ॥

ते पवनपित्तकफजाः सप्तनवैकादशावधीन्दिवसान् ॥
द्विगुणान्प्रयांति हातुं हंतुं चेत्प्रशांतये दिवसाः ॥ ३ ॥

अवध्यंतराणि सूचयितुं मतांतरमाह–त इति ॥ पवनपित्तकफजास्ते संतता ज्वराः द्विगुणान् सप्त च नव च च एकादश च ते अवधयो येषां तान् दिवसान् । एवं च वातोत्कटः सप्त चतुर्दशो वा । पित्तोत्कटो नव अष्टादशो वा । कफोत्कटः एकादशो द्वाविंशतिर्वा । रसादिशुद्ध्याऽन्यथा वेत्यावर्तते । हातुं त्यक्तुं, हंतुं मारयितुं प्रयांति, इति हारीत आह ब्रवीति ॥ ३ ॥

वात पित्त कफसे उत्पन्नहुआ सन्ततज्वर क्रमसे सात नौ और ग्यारह दिन रहता है और वातादि दोष उत्कट हों तो इनकी मर्यादा द्विगुण होजातीहै । जैसे वातके १४ दिन पित्तके १८ दिन, कफके बाईस दिन । इनमें रसादिकोंकी शुद्धि होनेपर सन्ततज्वर मनुष्यको छोड देताहै । यदि रसादिकोंकी शुद्धि न हुई हो तो मारदेताहै यह हारीतका वचनहै ॥ ३ ॥

सप्तदशद्वादशैते द्विगुणा अप्यनिलपित्तकफजानाम् ॥
क्रमशः स्मृता ज्वराणां कैश्चित्संशांतये दिवसाः ॥ ४ ॥

सप्तदशेति ॥ कैश्चिदाचार्यैः अनिलपित्तकफजानां ज्वराणां सप्तदश द्वादश एते दिवसाः द्विगुणाः क्रमशः स्मृताः संशांतये अर्थाद्रोगिणो वा उपशमाय ॥ ४ ॥

और कोई कोई आचार्य वात पित्त कफसे उत्पन्न हुए सन्ततज्वरकी मर्यादा सप्त–दश और बारह दिनकी कहते हैं । तथा दोष उत्कट होनेपर द्विगुण अर्थात् क्रमसे चौदह बीस और चौबीस दिनकी मर्यादा है । इस मर्यादामें सन्ततज्वर शान्त होजाताहै ॥ ४ ॥

आतंकमुक्तेः कृशता त्रयाणां
विमुक्तपथ्याद्युचितक्रियाणाम् ॥
अल्पोऽपि दोषो विषमं विदध्या-
ज्ज्वरं विवृद्धः प्रतिपक्षरुद्धः ॥ ५ ॥

अथ संततादीनां निरूपणं चिकीर्षुस्तेषां विषमज्वरत्वं प्रतिपादयितुं सामान्यतस्तत्संप्राप्तिमाह–आतंकमुक्तेरिति ॥ आतंकाद्भयान्मुक्तिर्यस्यासौ आतंकमुक्तिस्तस्यातंकमुक्तेः नरस्य त्रयाणां दोषाणां कृशता भवति । कीदृशां त्रयाणां विमुक्तपथ्यादय उचिताः क्रिया उपचारा येषां तेषां पथ्यं भेषजम् । आदिपदेन विहाराहारौ । एतेनापथ्यसेवया विषमो भवतीति सूच्यते । अल्पोपि दोषः विषमं ज्वरं विदध्यात्कुर्यादित्यर्थः । अल्पस्यापि कथं ज्वरकर्तृत्वमिति दोषं विशिनष्टि–विवृद्ध इति । नन्वेवं सर्वदा ज्वरप्रसंगः स्यात् प्रतिपक्षेण प्रतिकूलदूष्याद्यन्यतमेन रुद्धस्तिरोहितशक्तिः ॥ ५ ॥



ज्वरके छूटजानेपर औषधी आहार विहारादि पथ्यका यथावस्थित उपचार न होनेसे दोष पुनः बलवान् होजातेहैं । विरुद्ध दूष्यादिकोंमें किसी एकसे भी शक्ति रुकजानेपर कोपको प्राप्त होकर अल्प दोष भी विषमज्वरको पैदा करदेताहै । इससे यह सूचित कियागया कि एक बार ज्वरके दूर होजानेपर ही अपथ्यसेवन करनेसे पुनः वह ज्वर आक्रमण करलेताहै क्योंकि ज्वरके दूर होनेके तात्कालिक समयमें बिलकुल दोष शुद्ध नहीं होतेहैं, अत एव उसी समय अपथ्य वस्तुके सेवनसे अल्प दोषभी कुपित होकर ज्वर पैदा करतेहैं । उस ज्वरको विषमज्वर कहते हैं । ग्रन्थान्तरोंमें भी " मुक्तानुबन्धित्वं विषमत्वम् " यह लक्षण कियाहै । विषमज्वर अपथ्यसे ही होताहै ॥ ५ ॥

स हि स्वकाले स्वबलानुरूपः प्रवर्ततेथ प्रतिपक्षकाले ॥
क्षीणो रसादिष्वभिलीय कुर्याद्वैवर्ण्यतापारुचिकासदैन्यम् ॥ ६ ॥

सहेति ॥ सः विषमज्वरः दोषः स्वस्य दूष्यादिसहायसंपत्त्या जातस्य बलस्यानुरूपः सन् यथायथा वक्ष्यमाणे काले प्रवर्तते वेगं करोति । एतेन स्वल्पकालोप्यस्यास्यबलाधायक इत्युक्तम् । तथावतरन् प्रतिपक्षकाले तद्बलाशयक्षीणः अबलत्वाद्धीनवेगः सन् रसादिधातुषु अभिलीय सूक्ष्मरूपेणावस्थाय वैवर्ण्यादिपंचकं कुर्यात् ॥ ६ ॥

वह विषमज्वर दोषानुसार अपने दूष्यादि ( रसरक्तादि ) कोंकी सहायतासे उत्पन्नहुए बलके अनुसार अपने समयमें वेग करताहै और अपने दूष्यादिकोंकी सहायता न होनेपर क्षीणहुआ रस रक्तादिकोंमें सूक्ष्मरूपसे स्थित होकर शरीरके वर्णको बदलदेताहै । ताप, अरुचि, खांसी और दीनताको पैदा करताहै ॥ ६ ॥

भूताभिषंगं विषमानजातु धातुप्रसक्तिं च परित्यजंति ॥
अनेकभेदा अपि ते च तत्त्वाच्चत्वार उक्ताः सततादयोऽत्र ॥ ७ ॥

नन्वेवं विषमस्य नवत्वापत्तिरित्यत आह–भूताभिषंगमिति ॥ भूतानां देवासुरादिग्रहाणामभिषंगः धातूनां वातादीनां दोषाणां च प्रसक्तिं विषमाः विषमज्वराः जातु न परित्यजन्ति । एवंविधस्य संप्राप्तिं निरूप्य सततादीनां तद्भेदत्वमाह–अनेकविपर्ययार्द्धशीतोष्णादयो भेदा येषां ते अपि ते च सततादयश्च अत्रायुर्वेदे तत्त्वात उक्ताः ॥ ७ ॥

विषमज्वर भूताभिषंगको और वात, पित्त, कफ इन दोषोंकी शक्तिको नहीं छोडतेहैं। विषमज्वरके अनेक भेद होनेपर भी तत्त्वसे चार ही सतत, अन्येद्यु, तृतीयक और चतुर्थक ये कहेहैं ॥ ७ ॥

दोषः शोणितमागतः सततकं कुर्याज्ज्वरं सत्वरं
द्वौ कालावनुवर्तते दिननिशोरन्येद्युराख्यं पुनः ॥
नाडीर्मांसवहाः स एकमुदितं स्वं चाथ मेदावहा
एकाहांतरमेकमुद्गति दिनं प्रायः स शीतस्तु सः ॥ ८ ॥

किमाश्रितो दोषः सततादीन् करोति किं च तेषां स्वरूपमित्याह–दोष इति ॥ शोणितं रक्तम् आगतोऽभिव्याप्य स्थितः दोषो वातादिः सततकं सततकनामानं ज्वरं कुर्यात, हीति निश्चितं, सः ज्वरः दिननिशोः द्वौ कालौ विशेषानुक्तेः दिने द्वौ रात्रौ वा द्वौ। दिने एकं रात्रावेकमिति वा। "यावद्दोषाः रसस्थानं नाप्नुवंति विशेषतः। न भवेच्च ज्वरस्तावत्"। इति वचनात् पुनरिति पूर्वव्यवच्छेदाय मांसवहा नाडीर्धमनीः आगतो दोषः अन्यस्मिन् दिने भवतीति योगात्तदाख्यं कुर्यात्। अत्र नाडीग्रहणं तद्द्वारा रक्तादिप्राप्त्यर्थं वस्तुतो मांसाश्रित एवेति। सः अन्येद्युः दिनानिशोः उदितं स्वं कालम् एकं दिने रात्रौ वा एकमेवानुवर्तते च। तद्यथा–"वातोत्कटो दिनांते निशांते वा, पित्तोल्बणो दिनमध्ये निशामध्ये वा, कफोल्बणः पूर्वाह्णे पूर्वरात्रे" इति। एतेनान्येद्युष्कश्च कफात्प्रायः मेदोवहानाडी आगतो दोषः एकाहांतरज्वरं कुर्यात स तु एकं दिनम् उद्गति। एतेन एकाहांतरसंज्ञया एकाहेन अंतरं व्यवधानं यस्मिन्नित्यन्वर्थत्वं सूचितम्। कीदृशः प्रायः शीतेन सह वर्तमानः ॥ ८ ॥

वात, पित्त, कफ यह दोष रक्तमें प्राप्त होकर सततज्वरको करतेहैं। और यह सततज्वर दिनमें दो बार अथवा रात्रिमें दो बार अथवा दिन और रातमें दो बार आताहै। वातादि दोष मांसको बहानेवाली नाडीमें प्रवेश करके अन्येद्यु ज्वरको पैदा करतेहैं और वह दिनमें एक बार अथवा रात्रिमें एक बार, अथवा दिन रातमें एक बार आक्रमण करतेहैं। और वातादि दोष मेदाको बहानेवाली नाडियोंमें प्राप्त होकर तृतीयज्वरको पैदा करतेहैं और वह ज्वर एक दिन छोडकर आक्रमण करताहै और तृतीयज्वरमें प्रायः प्रथम शीत लगताहै ॥ ८ ॥

पृष्ठं वातकफात्त्रिकं शिखिकफान्मौलिं च पित्तानिलाद्
गृह्णात्यात्मबलात्तृतीयक इति त्रेधाऽस्थिमज्जामथ ॥



संश्लिष्यन्संचतुर्थकं द्व्यहमसौ मुक्त्वा समाविर्भवे-
न्मौलेर्मारुततः स्मृतश्च कफतो जंघाद्वयात्स द्विधा ॥ ९ ॥

दोषप्रकारमाह–पृष्ठमिति ॥ वातकफाज्जातो ज्वरः आत्मबलात् स्वप्रभावात् पृष्ठं गृह्णाति पूर्वं पीडयतीत्यर्थः। शिखिकफात पित्तकफाज्जातो ज्वरः त्रिकं पृष्ठवंशाधोऽस्थित्रयसंघातं गृह्णाति। च पुनः पित्तानिलाज्जातो ज्वरो मौलिं गृह्णातीत्यनेन प्रकारेण तृतीयकज्वरस्त्रेधा त्रिप्रकारको भवति। तृतीयेह्नि भवतीति योगात। अथानंतरम्, अस्थि मज्जां वा संश्लिष्यन् आश्रयन् सः दोषः चतुर्थकमित्यत्र कुर्यादित्यावर्त्तते। असौ चतुर्थको द्व्यहं दिनद्वयं मुक्त्वा त्यक्त्वा यस्तु आत्मबलान्मौलिमापीड्य समाविर्भवेत् स मारुततः वातोल्बण इति यावत, स्मृतः कथितः। यश्चतुर्थकः जंघाद्वयात् पादपिंडकयोर्द्वयमापीड्य आविर्भवेत् सः कफतः कफोल्बण इति। स ज्वरः द्विधा स्मृत इत्यर्थः। मज्जनशब्दस्य स्त्रीत्वमप्यमरटीकायाम्। मौलेरित्यत्र ल्यब्लोपे पंचमी। जंघाद्वयादित्यत्रापि ॥ ९ ॥

वात कफसे उत्पन्नहुआ ज्वर अपने बलसे पीठ भागको, कफ पित्तसे उत्पन्न हुआ ज्वर त्रिक (पीठके नीचेकी तरफकी तीन हड्डियोंका समूह) को और पित्त वातसे उत्पन्नहुआ ज्वर अपने बलसे शिरको प्रथम पकडताहै। इस प्रकार तृतीय ज्वर तीन प्रकारका है। वातादि दोष हड्डी और मज्जामें प्राप्त होकर चातुर्थिकज्वरको करतेहैं और वह ज्वर दो दिनका बीचमें व्यवधान देकर आक्रमण करताहै। यदि चातुर्थिक ज्वर अपने बलसे प्रथम शिरपर आक्रमण करे तो वातोल्बण और जो दोनों जंघाओंको। प्रथम पीडित करै तो कफोल्बण समझना चाहिये। इस प्रकार चातुर्थिक ज्वर दो प्रकारका है ॥ ९ ॥

रक्तादिधातुगैर्दोषैर्दर्शिताः सततादयः ॥
कफस्थानविभागेन तानेवोद्भवतः शृणु ॥ २१० ॥

रक्तादीति ॥ रक्तादिधातुगतैर्दोषैर्वातादिभिः सततादयश्चत्वारो विषमज्वरा दर्शिताः "कफस्थानविभागेन यथासंख्यं करोति हि ॥ सततान्येद्युष्कआख्यचतुर्थान् सप्रलेपकान् ॥" अत्र कफस्थानान्यामाशयहृदयकंठशिरःसंधयः इति वृद्धसुश्रुतमतं संग्रहीतुमाह कफस्य स्थानेषु दोषाणां स्थितिविभागेनेति यावत्। उद्भवतः उत्पद्यमानात तान् सततादीन् एव त्वं शृणु ॥ २१० ॥

रक्त मांसादि धातुगत दोषोंसे सततादि चार विषम ज्वर कहे हैं । कफके स्थानोंमें दोषोंके विभागसे उत्पन्नहुए सततादिकोंको तुम सुनो ॥ २१० ॥

आमाशयस्थः सततं ह्युरःस्थोऽ-
न्येद्युष्कसंज्ञं तनुते गलस्थः ॥
तृतीयकं मूर्द्धगतश्चतुर्थं
स्थानादिति स्थानमुपैति दोषः ॥ ११ ॥

आमाशय इति ॥ आमाशयस्थो दोषः सततं ज्वरं वितनुते । हीति निश्चितम्, उरःस्थो दोषः अन्येद्युष्कसंज्ञं तनुते । गलस्थः कंठस्थो दोषस्तृतीयकं तनुते । मूर्द्धगतो मस्तकं प्राप्तो दोषश्चातुर्थकं कुरुते । नन्वामाशयप्राप्तिं विना उरःप्रभृतिस्थितदोषस्य कथं ज्वरकर्तृत्वमित्यत आह–स्थानादिति । वक्ष्यमाणप्रकारेण एवं स्थानात् स्थानं दोष उपैति प्राप्नोति ॥ ११ ॥

आमाशयमें स्थित दोष, सततज्वरको; छातीमें स्थित दोष, अन्येद्युष्क ज्वर, कण्ठमें स्थित दोष तृतीय ज्वर; और शिरमें स्थित दोष चतुर्थक ज्वरको उत्पन्न करताहै । उरःस्थ दोष किसतरह ज्वरको पैदा करसक्ताहै ? क्योंकि ज्वर तो आमाशयस्थ दोष होनेपर ही पैदा होताहै । इस शंकाको दूर करनेके लिये कहतेहैं 'स्थानादिति'–दोष वक्ष्यमाण प्रकारसे एक स्थानसे दूसरे स्थानमें प्राप्त होकर ज्वरको करतेहैं उसको ही अत्र कहतेहैं ॥ ११ ॥

अन्येद्युराख्ये हि दिने न दोषो
वक्षःस्थलादामगृहं प्रयाति ॥
तृतीयकेप्येवमसौ द्व्यहेन
कंठोर आमाशयमेवमूर्ध्वम् ॥ १२ ॥

तमेवाह–अन्येद्युरिति ॥ स चात्र ज्वरकृतिरूपो दोषः दिनेनाहोरात्रेण अन्येद्युराख्ये अन्येद्युष्कज्वरे वक्षःस्थलात् हृदयात् आमस्य गृहमामाशयं प्रयाति गच्छति । एवम् असौ दोषस्तृतीयकेऽपि ज्वरे द्व्यहेन दिनद्वयेन कण्ठादुर आमाशय इति वक्तव्ये कंठेत्यादिसमासनिर्देशः । एवमूर्द्धमित्युत्तरार्थः।एकेनाह्ना कंठादुरो द्वितीयेनोरसश्चामाशयमिति तात्पर्यम् । सर्वत्र दिनगणनाऽऽवृत्तिदिनेन सहैवेत्यवधेयं संप्रसंगादन्येद्युष्कतृतीयकयोर्दोषस्य पुनः स्वस्थानगमनमाह–एवमूर्द्धमपि यथास्थानादध आमाशयं प्रयाति । तथोर्द्धमामाशयात् उपरि वक्षःस्थलादिषु प्रयातीति तात्पर्यम् । पुनः स्थानगमनम् आवृत्तिदिन एव दोषस्य कृतवेगत्वेन लाघवादिति ॥ १२ ॥



अन्येद्यु ज्वरमें दिनरातमें वक्षःस्थलसे दोष आमाशयमें आतेहैं और आकर ज्वरको पैदा करते है । तृतीयज्वरमें कण्ठस्थित दोष एक दिनमें हृदयमें प्राप्त होतेहैं, दूसरे दिन हृदयसे आमाशयमें आकर तृतीयज्वरको पैदा करतेहैं ॥ १२ ॥

चतुर्थके मूर्द्धगलोरआमाशयं त्र्यहेणैवमतोपि मौलिम् ॥
आमाशयं वक्षस एत्य वेगादन्येद्युराख्यं ज्वरमातनोति ॥ १३ ॥

चतुर्थक इति ॥ असौ दोषः चतुर्थकज्वरे त्र्यहेण दिनत्रयेण एकेनाह्ना मूर्द्धगतो गलं द्वितीयेन गलतः उरस्तृतीयेनोरसः आमाशयमिति त्र्यहेण प्रयाति । एवमतोपि एव अनेन प्रकारेणैव अतोऽपि आमाशयतोऽपि मौलिं प्रयाति । सार्द्धश्लोकेन नवीनसुश्रुतमतमाह–दोष आवर्त्तते वेगादिति च सर्वत्र संबध्यते । दोषवेगात् वक्षसः हृदयात् आमाशयमेत्य प्राप्य अन्येद्युराख्यम् अन्येद्युष्कनामानं ज्वरम् आतनोति करोति ॥ १३ ॥

एवं चातुर्थक ज्वरमें शिरःस्थित दोष एक दिनमें कण्ठमें, दूसरे दिन कण्ठसे हृदयमें, तीसरे दिन हृदयसे आमाशयमें आकर चातुर्थक ज्वरको पैदा करतेहैं । और हृदयसे दोष अपने वेगसे एक दिनमें ही आमाशयमें प्राप्त होकर अन्येद्युष्क ज्वरको करताहै ॥ १३ ॥

आमाशयं प्राप्य च कंठदेशा-
त्तृतीयकाख्यं कुरुतेऽथ मौलेः ॥
आमाशयं प्राप्य चतुर्थकाख्यं
गतिस्वभावादिति सुश्रुतोक्तिः ॥ १४ ॥

आमाशयमिति ॥ दोषः कंठदेशात् आमाशयं प्राप्य एत्य तृतीयकाख्यं ज्वरं कुरुते । अथानंतरं मौलेः मस्तकादामाशयं प्राप्य चतुर्थकाख्यं ज्वरं करोति । एतेन आवृत्तिदिन एव स्वस्थानादामाशयं प्रति झटित्यागमनं न त्वेकाहादिना, तावत्कालं तु स्वस्थान एव स्थितिरिति सूचितम् । उक्तेर्थे हेतुमाह–गतिस्वभावात् दोषस्य गतेः स्वभावात् तस्यापर्य्यनुयोज्यत्वादितिभावः । इदमुपलक्षणम्, आवृत्तिदिन एव पुनः स्वस्थानगमनं स्वस्थकालनियमश्च गतिस्वभावादेवेति ॥ १४ ॥

दोषोंकी गतिके स्वभावसे कण्ठस्थानसे दोष क्रमशः आमाशयमें आकर तृतीयज्वरको पैदा करतेहैं । और दोषोंकी गति स्वभावसे ही शिरस्थानमें स्थित दोष आमाशयमें प्राप्त होकर चातुर्थक ज्वरको करतेहैं । यह सुश्रुतका कथन हैं ॥ १४ ॥

दोषो द्वित्रिचतुष्केषु स्थानेषु निवसन् क्रमात् ॥
कुर्यादन्येद्युरादीनां दुःसाध्यान्स विपर्ययान् ॥ १५ ॥

विषमज्वरप्रसंगादन्येद्युष्कादिविपर्ययानाह–दोष इति ॥ दोष एषु पूर्वोक्तेषु स्थानेषु द्वित्रिचतुष्केषु कफस्थानेषु निवसन् सन् अन्येद्युरादीनामन्येद्युष्कादिज्वराणां दुःखसाध्यान् कृच्छ्रसाध्यान् विपर्ययान् कुर्यात्। क्रमादिति । आमाशयवक्षसोर्द्वयोः स्थानयोस्तिष्ठन्, अन्येद्युष्कस्य आमाशयवक्षःकंठेषु त्रिषु स्थानेषु तिष्ठन् तृतीयकस्य आमाशयवक्षःकण्ठशिरःसु चतुर्षु स्थानेषु तिष्ठन् चतुर्थकस्य विपर्ययं कुर्यादित्यर्थः। एवं रक्तमांसयोः रक्तमांसमेदःसु रक्तमांसमेदोस्थिषु तिष्ठन् विपर्ययं कुर्यादिति ध्येयम् । विपर्ययत्वं चैषां यथास्वं ग्रहमोचनकालविपरीतकालत्वेनेति ध्येयम् ॥ १५ ॥

वातादि दोष कफके दो तीन चार स्थानोंमें निवास करतेहुए क्रमसे अन्येद्युष्क आदि ज्वरको विपर्य्यय करतेहैं और यह विपर्य्यय कृच्छ्रसाध्य होताहै । आमाशय और हृदय इन दो स्थानोंसे अन्येद्युष्क विपर्य्यय होताहै । आमाशय, हृदय कण्ठ इन तीन स्थानोंसे तृतीयक ज्वरका विपर्य्यय होताहै । आमाशय हृदय कण्ठ शिर इन चार स्थानोंसे चातुर्थक विपर्य्यय होताहै । प्रातःकाल अथवा सायंकाल इन दोनों समयोंमेंसे एक समयको छोडकर हृदयस्थ दोष आमाशयमें आकर सम्पूर्ण दिन और रातमें ज्वरको करते रहैं अर्थात् प्रातःकाल या सायंकालमेंसे किसी एक समय ज्वर उतर जाताहै फिर दिनरात बनारहताहै इसको अन्येद्युष्क विपर्य्यय कहतेहैं । और हृदयस्थ दोष एक दिनमें आमाशयमें आकर ज्वरको करतेहैं उसी दिन कण्ठस्थ दोष हृदयमें आते हैं और दूसरे दिन हृदयस्थ दोष आमाशयमें आकर तृतीयज्वरको पैदा करतेहैं । एवं दो दिन ज्वर होकर एक दिन नहो उसको तृतीयक विपर्य्यय कहतेहैं । जिस दिनमें हृदयस्थ दोष आमाशयमें आकर ज्वर करतेहैं उसी दिनमें कण्ठस्थ दोष हृदयमें और शिरःस्थ दोष कण्ठमें आतेहैं दूसरे दिन हृदयस्थ दोष आमाशयमें आकर ज्वरको करतेहैं और कण्ठस्थित दोष हृदयमें आतेहैं तीसरे दिन हृदयस्थ आमाशयमें आकर ज्वरको करतेहैं । एवं तीन दिन बराबर ज्वर होकर पीछे एक दिन ज्वर नहो इसको चातुर्थक विपर्यय कहतेहैं ॥ १५ ॥

पंचाशन्नाडिकाः पूर्वः स्वदिनेन्योऽखिलं दिनम् ॥
दिनद्वयं चतुर्थाख्यो व्याप्नोत्येष विपर्ययः ॥ १६ ॥

क्रमेण विवृणोति पंचाशदिति ॥ पूर्वः अन्येद्युष्कविपर्ययः, स्वदिने पालिदिने पंचाशन्नाडिकाः पंचाशद्घटिकाः व्याप्नोति अर्थाद्दशनाडिकाः मुंचति । एतेन पंचाशन्नाडिकानामन्येद्युष्कमोचनकालत्वं सूचितम् ॥१६॥



द्वितीय मत यह है–अन्येद्युष्क ज्वरमें पचास घडी ज्वर शरीरमें व्याप्त रहताहै केवल दश घडीको प्रातः या सायंकालमें मुक्त होताहै । और तृतीयक विपर्य्ययमें मध्यमें एक दिन ज्वर आता है पहिले दिन और तीसरे दिन ज्वर नहीं आताहै । चातुर्थक विपर्य्ययमें पहिले दिन ज्वर नहीं होता दूसरे तीसरे दिन ज्वर रहताहै चौथे दिन ज्वर नहीं होताहै ॥ १६ ॥

प्रलेपकः शोषिणि दुश्चिकित्स्यः
स्याद्धातुशोषप्रणयी यतोऽयम् ॥
गात्राणिलिम्पन्निव मंदशीत-
प्रलापवानन्वहमेति पापः ॥ १७ ॥

प्रलेपक इति ॥ प्रलेपको ज्वरः शोषिणि यक्ष्मणि पुंसि दुश्चिकित्स्यः स्यात् । यतो हेतोरयं प्रलेपको धातुशोषणप्रणयी सहचरः तदारंभकदोषत्रयजत्वादिति भावः । तल्लक्षणमाह–किं कुर्वन्निव गात्राणि लिंपन्निव धर्मगौरवाभ्यां सम्बध्नातीति यावत् । अन्वहं पापोऽतिदुःखदः एति अनुवर्तते, ज्वरयति मन्दज्वरः शीतं प्रलापौ च विद्येते यस्मिन् सः । अस्य संधिजत्वात्संधीनां चामाशये विद्यमानत्वादिति भावः । अस्य नास्ति विषमत्वम् ॥ १७ ॥

राजयक्ष्मावाले पुरुषको उत्पन्नहुआ प्रलेपक ज्वर दुःसाध्य होताहै क्योंकि यह प्रलेपक ज्वर रसादि धातुओंको सुखानेवाला है । गर्म्मी और भारीपनसे शरीरको बांधताहै । शीत लगताहै । प्रलाप करताहै और प्रतिदिन इस ज्वरसे मनुष्य दुःखी रहताहै ॥ १७ ॥

उत्क्लेशः सदनमरोचको गुरुत्वं
दीनत्वं भृशमधिसूत्रतांगमर्दः ॥
संतापो बहिरतिजृम्भणं वमी तृट्
सर्वस्मिन् भवति किल ज्वरे रसस्थे ॥ १८ ॥

स्थानगतदोषजत्वसाम्येन सततसंगाद्रसादिधातुस्थानगतदोषजाञ्ज्वरानाह उत्क्लेश इति ॥ किलेति श्रूयते–सर्वस्मिन् ज्वरे रसस्थे समितानि चिह्नानि उत्क्लेशः उपस्थितवमनत्वमिव सदनमंगसादोऽरोचको गुरुत्वम्, आर्द्रवस्त्रावनद्धत्वमिव दीनत्वं दीनता, अधिमूत्रता मूत्राधिक्यम्, अंगमर्दः स्फुटनिका, बहिः संतापो बहिरंतरनिवृत्त्यर्थम्, अतिजृंभणम् अतिजृम्भा, वमी छर्दिस्तृट् तृषा ॥ १८ ॥

रसस्थानमें ज्वर होय तो उबकाई आना, शरीरमें पीडा, अरुचि, शरीरमें भारीपन, दीनता, मूत्रकी अधिकता, शरीरमें फूटनी, बाहिर सन्ताप, अत्यन्त जंभाई, वमन, प्यास ये लक्षण ज्वर सम्पूर्ण रसस्थानमें स्थित होय तब होतेहैं ॥ १८ ॥

संतप्तो भ्रममददाहरागमूर्छा-
तृष्णोष्मारुणपिडिकोद्गमप्रलापैः ॥
यः ष्ठीवेदसृगतिसांद्रफेनमिश्रं
स इ[illegible]ः क्षतजगतज्वराभिभूतः ॥ १९ ॥
दुर्गधं वपुरभितः क्षिपत्यजस्रं
तृड्ग्लानिभ्रममदमोहदाहजुष्टः ॥
सर्वस्मिन्न भवति ज्वरे विवर्चा
मांसस्थे ध्रुवमतिसृष्टमूत्रवर्चाः ॥ २२० ॥

रक्तज्वरमाह-संतप्त इति ॥ यो नरः भ्रमादिभिः संतप्तः सन् असृक रुधिरम्, अति अत्यंतं ष्ठीवेत् । कीदृशम् असृक्, सांद्रफेनमिश्रं घनफेनयुक्तं स नरः क्षतजे रक्ते गतेन ज्वरेणाभिभूत उपद्रुतः भ्रमश्चक्रारूढस्येव, मदो भंगाभक्षण इव, दाहोऽत्राभ्यंतरे रागः शरीरे रक्तत्वं, मूर्च्छा मूर्च्छनं, तृष्णा तृट्, उष्णानामुष्णस्पर्शानामरुणपिडिकानामुद्गमः प्रादुर्भावः, प्रलापोमिथ्याभाषणम् ॥ १९ ॥ मांसगतज्वरमाह-दुर्गंधमिति ॥ मांसस्थे सर्वस्मिन्नपि ज्वरे पुमानेवंविधो भवति । अजस्रं निरंतरं तृडादिभिर्जुष्टः सन् दुर्गंधं वपुः अभितः क्षिपति । पर्यायेण द्वयोः परिवर्तयति नर इत्यर्थात् । किंभूतो नरः । विगतः वर्चस्तेजो यस्य सः विवर्चा ध्रुवम् । पुनः किंभूतः । अतिसृष्टे मूत्रवर्चसी यस्य सः । तृट् तृषा ग्लानिः खेदो भ्रमश्चलनं मदो मत्तता, मोहो विचाराशक्तिः, दाहोंऽतर्दाहः । "तेजः पुरीषयोर्वर्चः" इति यादवः ॥ २२० ॥

सन्ताप, श्रम, गद, दाह, मोह, मूर्च्छा, प्यास, गरम स्पर्श वाली लाल फुन्सियोंका पैदा होना, प्रलाप तथा जो मनुष्य गाढा और फेनयुक्त रुधिर थूके उसको रक्तगत ज्वरसे पीडित समझना चाहिये ॥ १९ ॥ मांसगत ज्वरमें मनुष्यका शरीर दुर्गन्धयुक्त होताहै दुर्गन्धित शरीरको चारों तरफ फैंकता है । निरन्तर प्यास, ग्लानि भ्रम, मद, मोह, अन्तर्दाहसे दुःखित रहताहै और तेजरहित होताहै । मूत्र और विष्ठा अधिक होतीहै ये सम्पूर्ण लक्षण मांसगत ज्वरमें होतेहैं ॥ २२० ॥



स्वं गंधं न विषहते वमत्युदन्या
ग्लान्यार्त्तः प्रलपति तीव्रतापवेगात् ॥
सस्वेदः प्रहतरुचिर्भवत्यवश्यं
मेदःस्थज्वरपरिपीडितो मनुष्यः ॥ २१ ॥

मेदोगतज्वरमाह-स्वंगन्धमिति ॥ मेदस्थेन ज्वरेण परिपीडितो मनुष्यः अवश्यं स्वं गंधमात्मीयगंधं न विषहते गन्ध उग्रदुर्गन्धो मेदोदुष्यास्तन्मलस्थस्वेदस्य विकृतत्वात तं सोढुं न शक्नोति। षहमर्षणे लट् । वमति वमनं करोति । तीव्रतापवेगात् अतिज्वरजवात् उदन्यया ग्लान्या च आर्त्तः सन् प्रलपति सस्वेदो भवति। स्वेदो मेदोमलस्तेन सहितः । किंभूतः । प्रहता नष्टा रुचिः कांतिर्यस्य सः ॥ २१ ॥

मेदोगत ज्वरसे पीडित मनुष्य अपने शरीरकी उग्र दुर्गन्धको नहीं सहताहै क्योंकि मेदके दुष्ट होनेसे मेदका जो मळ पसीना है उसमें दुर्गन्ध आजातीहै । वमन करताहै, प्यास और खेदसे पीडित हुए ज्वरके तीव्र वेगसे प्रलाप करताहै । पसीनायुक्त और कान्तिरहित होताहै ॥ २१ ॥

अस्थिस्थेस्थनि रुगतीव वान्तिरेकौ
विक्षेपः श्वसनतमोऽन्त्रकूजनानि ॥
मज्जस्थे श्वसनतमोविमोहहिक्का-
दाहोन्तर्बहिरतिशैत्यमस्थिभेदाः ॥ २२ ॥

अस्थिगतमाह-अस्थिस्थ इति ॥ अस्थिस्थे ज्वरे अस्थनि कीकसे भेदलक्षणः । अतीव अत्यंतं रुक् पीडा भवति । "भेदोऽस्थ्नाम्" इति तंत्रांतरे पाठः । वांतिरेकौ छर्द्यतीसारौ भवतः । विक्षेपः इतस्ततो गात्राणां प्रक्षेपः, श्वसनं श्वासः, तमोंधकारप्रवेशः, अंत्रकूजनम् अंत्रांतर्गतशब्दः एतानि भवंति । मज्जस्थ इति । मज्जस्थे ज्वरे श्वसनतमआदीनि भवंति । श्वसनं श्वासः, तमोंधकारप्रवेशः, विमोहो वैचित्यं, हिक्का अंतर्दाह इति सम्बन्धः, बहिरति शैत्यम् अस्थिभेदः अस्थिषु भेदनवत्पीडा ॥ २२ ॥

अस्थिगत ज्वरमें हड्डियोंमें अत्यन्त पीडा, वमन, अतीसार, शरीरका फैंकना, श्वास, आंखोंसे अन्धेरा माळूम होना, आंतोंमें शब्द ये लक्षण होतेहैं । और मज्जागत ज्वरमें श्वास, अन्धेरा दीखना, विचार करनेकी अशक्ति, हिचकी, भीतर दाह और बाहिर अत्यन्त शीत लगना, हड्डियोंमें फूटन ये लक्षण होतेहैं ॥ २२ ॥

शुक्रस्थे भवतकि मज्जगस्य लिङ्गं
लिङ्गश्चात्र न मृदुतामुदीतमेति ॥
अश्रांतं क्षरति च रेत एतदुक्तं
संस्थानं ध्रुवमिति धातुगज्वराणाम् ॥ २३ ॥

शुक्रगतमाह-शुक्रेति ॥ शुक्रस्थे ज्वरे मज्जगस्य लिंगं श्वसनतमइत्या-शुक्तं भवतकि कुत्सितं भवतीत्यर्थः । तत्किं मरणकारित्वात् यदुक्तं-'मरणं प्राप्नुयात्तत्र' इति । अव्ययसर्वनाम्नामिति तत्र तिङश्चेत्यनुवृत्ते कुत्सितार्थे टेः पूर्वमकच् । अत्र ज्वरे उदीतमुत्थितं लिङ्गं शिश्नो मृदुतां मार्दवं न एति न प्राप्नोति न पुनः पततीति यावत् । रेतः शुक्रं च अश्रांतमविच्छिन्नं यथास्यात्तथा क्षरति स्रवति । ध्रुवम् इति प्रकारेण धातुगज्वराणां एतत्संस्थानं लक्षणमुक्तं कथितम् । सुश्रुते तु गुरुत्वदैन्यमुत्क्लेश इत्यादिक्रमेण सप्तधातुगज्वरलक्षणानि ॥ २३ ॥

शुक्रगत ज्वरमें मज्जागत ज्वरके लक्षण होतेहै उठाहुआ लिङ्ग ( शिश्न ) मृदुताको नहीं प्राप्त होताहै । और शुक्र हर समय झरता रहताहै । ये रसादिधातुग ज्वरोंके लक्षण कहेहैं ॥ २३ ॥

### सततादिज्वरोंकी चिकित्सा ।

विषमज्वरेषु विदधीत भिष-
ग्वमनं विरेचनमपि प्रथमम् ॥
त्रिफलाकषायमपिधाय रसं
तुवरं गुडेन विमलेन पिबेत् ॥ २४ ॥

सततादीनां चिकित्सामाह-विषमज्वरेष्विति ॥ भिषक् प्रथमं विषमज्वरेषु सततादिषु वमनं विरेचनमपि विदधीत कुर्यात । अपिशब्दाच्छमनमपि । वमनम् ऊर्ध्वमार्गेण दोषहरणम् अधोमार्गेण विरेचनम् तथा च-"विषमज्वरेषु कर्त्तव्यमूर्ध्वं चाधश्च शोधनम्" । इति अक्षीणविषयमेतत् । "ज्वरक्षीणस्य न हितं वमनं न विरेचनम् ॥" इति वचनात् । शमनमाह-त्रिफलाकषायं पिबेत, त्रिफलाकषायस्य तुवरं कषायं रसं विमलेन गुडेनापिधाय आच्छाद्य यावता गुडेन तुवरो रसो न स्यादेवं पिबेत् एवमाच्छाद्य पिबेत् । 'गुडप्रगाढां त्रिफलां पिबेद्वा' विषमज्वरार्ऽतः ॥२४॥



विषमज्वरोंमें प्रथम वैद्य यथायोग्य बलवान् पुरुषको वमन विरेचन देवे । अपिशब्दसे शमन औषधि भी देवे । शमन औषध कहतेहैं- त्रिफलाके ५.।ढमें अच्छा गुड इतना मिलाकर पीना चाहिये कि त्रिफला-हरड बहेडा आंवलेका कषाय रस दबजावे यानी दूर होजावे ॥ २४ ॥

पटोलमधुकं मुस्तं मुस्ता- तिक्ता पटोलकम् ॥
तिक्ता पटोलमधुकं पथ्या तिक्तापटोलकम् ॥ २५ ॥
मुस्ता पटोलमभया अभया मधुकं घनम् ॥
अभया कटुका मेवोऽभयायष्टी सरोहिणी ॥ २६ ॥
पथ्या यष्टी सकटुका पथ्या यष्टी पटोलकम् ॥
दशैते त्रिकसंयोगा विषमज्वरनाशनाः ॥ २७ ॥

पटोलमिति ॥ एते दशभिः पादैरुक्ता दश त्रिकस्य भेषजत्रयसमूहस्य सम्यग्योगाः विषमज्वरनाशना उक्ताः कथितास्तानाह-पटोलं मधुकं मुस्तं १, मुस्ता कटुकी पटोलपत्रैः २, कटुकी पटोलयष्टी ३, हरीतकीकटुकीपटोलपत्राणि ४, मुस्ता पटोलं पथ्या ५, हरीतकीयष्टीमुस्ताः ६, पथ्या कट्वी घनं ७, मुस्तमधुकतिक्ताः ८, पथ्या यष्टी कट्वी ९, हरीतकी मधुकं पटोलकम् १० एते दश ॥ २५ ॥ २६ ॥ २७ ॥

परवलके पत्ते, मुरेठी, मोथा १ मोथा, कुटकी, परवलके पत्ते २ कुटकी, परवलके पत्ते, मुरेठी ३ हरड, कुटकी, परवलके, पत्ते ४ ॥ मोथा, परवलके पत्ते, हरड ५ हरड, मुरेठी, मोथा ६ । हरड, कुटकी, नागरमोथा ७ मोथा, मुरेठी, कुटकी ८ हरड, मुरेठी, कुटकी ९ हरड, मुरेठी, परवलके पत्ते १० ये तीन तीन औषधियोंके दश समूह विषमज्वरको दूर करनेवाले हैं ॥ २५ ॥ २६ ॥ २७ ॥

मुस्तं पटोलं मधुकं सतिक्तं
तिक्ताभयामुस्तपटोलकानि ॥
पटोलपथ्यामधुकांबुभृद्भिः
पटोलयष्टीकटुकाभयाभिः ॥ २८ ॥
पयोदपथ्याकटुकाः सयष्ट्य-
श्चतुष्कयोगा इति पंच शस्ताः ॥
तिक्ताभयामेघपटोलयष्ट्यः
पंचात्मकोऽयं विषमे प्रदिष्टः ॥ २९ ॥

चतुष्कयोगानाह-मुस्तं पटोलयष्टीतिक्ताः १, कट्वी पथ्या मुस्तं पटोलम् २, पटोलं पथ्या यष्टी मुस्तं ३, पटोलयष्टीतिक्तापथ्याः ४ मुस्ता अभया कट्वी मधुकम् ५ इति चतुष्कस्य भेषजचतुष्कसमूहस्य योगाः पंच प्रशस्ता पंचात्मक एक एव योगो यथा-कट्वी, अभया, मुस्तं, पटोलपत्रं, यष्टीमधु अयं पंचात्मको योगो विषमे सततादिविषमे प्रदिष्ट उक्तः ॥ २८ ॥ २९ ॥

मोथा, परवलके पत्ते, मुरेठी, कुटकी १ कुटकी, हरड, मोथा, परवलके पत्ते २ परवलके पत्ते, हरड, मुरेठी, मोथा ३ परवलके पत्ते, मुरेठी, कुटकी, हरड ४ मोथा, हरड, कुटकी, मुरेठी ५ इन चार चार औषधियोंके पांच योग विषमज्वरको दूर करनेवाले हैं । कुटकी, हरड, मोथा, परवलके, पत्ते, मुरेठी इन पांच औषधियोंका योग भी विषमज्वरनाशक कहाहै ॥ २८ ॥ २९॥

विहाय मुस्तमेतेषु वत्सकेन विशारदाः ॥
षोडशाहुः पटोलादीन् योगान् रोगापहारिणः ॥ २३० ॥

विहायेति ॥ एतेषु पटोलादिषु मुस्तं विहाय त्यक्त्वा वत्सकेन इंद्रयवेन कृत्वा मुस्तास्थाने इंद्रयवं दत्त्वेति यावत् । विशारदा वैद्याः पटोलादीन्षोडश योगान् रोगापहारिणो रोगस्य प्रकृतत्वाद्विषमस्यापहारिणो हरणशीलान् आहुः कथयंति ॥ २३० ॥

इन पटोलादियोगोंमेंसे मोथाको निकालकर मोथाके स्थानमें इन्द्रजौ डालनेसे सोलह योग और होतेहैं । यह द्वितीय पटोलादि सोलह योग भी विषमज्वरको नाश करनेवालेहैं ॥ २३० ॥

यष्टीपटोलतिक्ताभोधरपथ्याभिरेव च ॥
त्रिभिः प्राहुश्चतुर्भिश्च पंचभिश्च क्रमाद्गणम् ॥ ३१ ॥

पूर्वोक्तान्षोडशयोगान् प्रमाणयति यष्टीति ॥ स्पष्ट एवायं श्लोकः ॥३१॥

मुरेठी, परवलके पत्ते, कुटकी, मोथा, हरड इन औषधियोंमेंसे तीन औषधियोंका ( गण ) चार औषधियोंका अथवा पांच औषधियोंके गणका क्काथ विषमज्वरके दूर करनेके लिये पीना चाहिये ॥ ३१ ॥

द्रोणपुष्पीजटाः क्षुण्णा निःक्काथ्य प्रपिबन्नरः ॥
उमापतिमनुध्यायन्मुच्यते विषमज्वरात् ॥ ३२ ॥

द्रोणपुष्पीति ॥ नरः पुमान् द्रोणपुष्पी कोटिन्यस्य जटाः मूलानि निःक्काथ्य नितरां क्काथं कृत्वा पिबन् विषमज्वरात् मुच्यते । कीदृश्यः



जटाः, क्षुण्णाः चूर्णिताः । किं कुर्वन् पुनः उमापतिं श्रीरुद्रम् अनुध्यायन् चिंतयन् सन् । पिबन्निति " लटः शतृशानचावप्रथमासमानाधिकरणे " इतिसूत्रेण शतृप्रत्ययः ॥ ३२ ॥

द्रोणपुष्पी ( गूमा ) की जडके क्काथको पीनेवाला और शिवजीका स्मरण करनेवाला पुरुष विषमज्वरसे छूट जाताहै ॥ ३२ ॥

लशुनमनिशं सर्पिर्मिश्रं सतैलमथोदये
सवितुरवितुर्जन्तोर्जग्धं ज्वरं विषमं जयेत् ॥
प्रबलपवनव्याधीन् हत्वा जरामपि नो चिरा-
ज्जनयति नरं सारोदारं स्मरादपि सुंदरम् ॥ ३३ ॥

लशुनमिति ॥ जंतोः अवितृ रक्षकस्य एतेनादौ नमस्करणीय इति सूचितम् । सवितुः सूर्यस्योदये एतच्च रसोनादिरसायनं प्रातरेव न रात्रावित्येतदर्थं लशुनं महाकंदं सर्पिषा गोघृतेन मिश्रम् । अथवा तिलतैलेन सहितम् । एतेन तदविषमे न प्रयोज्यं तत्र स्नेहनिषेधादिति सूचितम् । अनिशमन्वहं जग्धं भक्षितं सद् विषमज्वरं जयेत । प्रबलपवनव्याधीनाक्षेपकादीन् हत्वा निहत्य जरामपि वृद्धत्वमपि हत्वा नो चिरादचिरात् शीघ्रमिति यावत् । सारोदारं सारेण बलेनोदारमुत्कृष्टं स्मरात्कुसुमेषोरपि सुंदरं मनोज्ञं नरं जनयति करोति ॥ ३३ ॥

जगत्के रक्षक सूर्यके उदय होनेपर लहसनको गौके घृतमें तथा तिलके तेलमें मिलाकर खानेसे विषमज्वर दूर होताहै । सूर्योदयके कहनेसे रात्रिमें न खाना चाहिये । यह लहसनकी रसायन प्रबल वातकी व्याधि आक्षेपादिकोंको दूर करके तथा वृद्धत्वको दूर कर शीघ्र ही बलकी अधिकता करके कामदेवसे भी सुन्दर मनुष्यको बनादेतीहै ॥ ३३ ॥

पयः शिंशिपासारसिद्धं त्रिरम्भ-
श्चिरंभव्यसंरंभहारि ज्वरस्य ॥
सितासारमाधारपीयूषकृष्णाः
सतृष्णारतिश्वासकासज्वरघ्न्यः ॥ ३४ ॥

पय इति ॥ शिंशिपा कृष्णसारस्तस्य सारेण मध्यकाष्ठेन सिद्धं पयः क्षीणज्वरस्य चिरं भवतीति चिरंभव्यः । "भव्यगेयेति साधुः ।" तादृशः संरम्भो वेगस्तं हंतीत्येवं शीलं यस्य ईदृशं भवति । कीदृशं पयः । त्रिगुणमंभो जलं यस्मिन् तत् । द्वित्रिचतुर्भ्यः सुजिति सुच्प्रत्ययः । शिंशिपा-

सारात् क्षीरमष्टगुणं वेदितव्यं "द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयश्चतुर्गुणम्। क्षीरावशेषः कर्तव्यः क्षीरपाके त्वयं विधिः" इत्युक्तेः। तत्सर्वं निःक्वाथ्य क्षीरशेषं विधाय सिद्धक्षीरस्य क्वाथरूपत्वात्तु पलद्वयमेव मात्रा एवं शिंशिपासारकर्षेण क्षीरपलद्वयं जलं षट् पलं दत्त्वा क्षीरशेषं वस्त्रगालितं पिबेदिति ध्येयम्। सिता शर्करा, सारो मधु, आधारो घृतं, पीयूषं दुग्धं, कृष्णा पिप्पली, एता औषधयः-तृष्णा तृट् तया सहिता-या अरातिः अनवस्थितचित्तता। श्वासः श्वसनं, कासः कसनं, ज्वरो विषमज्वरः, एतान् घ्नन्तीति घ्नयः। "घृतमाज्यं हविः सर्पिराधारममृताह्वयम्।" इति मदनविनोदे "अमनुष्यकर्तृके च" इति हन्तेष्टक् प्रत्ययः। "गमहन–" इत्युपधालोपः। "टिड्ढ–" इति ङीप्। दुग्धमत्र शृतं शीतं ग्राह्यं मधुसर्पिषी अतुल्ये तुल्यांशतानिषेधात् "संयोगाद्विषतां याति सममाज्येन माक्षिकम्" इति। मधु सर्पिषा तुल्यं नाश्नीयादिति सर्पिर्मधुनः समांशो न विधेयः। दुग्धं सर्वत्र शृतं ग्राह्यम्। उक्तं च सुश्रुते–"पयोऽभिष्यन्दि गुर्वामं प्रायशः परिकीर्तितम्। तदेवोक्तं लघुतरमनभिष्यन्दि वै शृतम्" तदेव दुग्धं शृतं उष्णं सत् तेषु सितादिषु द्रव्येषु न क्षेप्यम्। मधुनो हि उष्णेन योगेन विषत्वं स्यात्। "उच्चैर्विरुध्यते सर्वं विषान्वयतया मधु। उष्णार्त्तमुष्णैरुष्णो वा तन्निहंति यथा विषम्" इति। पथ्यापथ्ये सर्पिः क्षीरसिताक्षौद्रमागधि-र्यथाबलं यथाबलमित्युक्तात्पुरुषाग्निबलापेक्षया मात्रा विधेया। अयं पंचसरो योगः। एतच्च योगद्वयं पुराण एव विषमे देयं तरुणे ज्वरे न देयम्। "जीर्णे ज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम्। तदेव तरुणे पीतं विषवद्धन्ति मानवम्" इति वचनात्॥ ३४॥

सीसमके सारसे अठगुना दूध और दूधसे तिगुना जल मिलाकर अग्निपर पकावे जब क्षीरमात्र शेष रहजावे तब पीवे। इस क्षीरपाकसे बहुत दिनोंका विषमज्वरका वेग दूर होजाताहै। (क्षीरपाक करनेकी यह परिभाषा है कि औषधीसे आठगुना दूध और दूधसे चौगुना जल लेकर अग्निपर पकावे, जब दूधमात्र बाकी रहजावे तब उसको पीना चाहिये) जहां औषधी दुग्ध जलकी मात्रा न लिखी हो वहां इस परिभाषाके नियमसे क्षीरपाक करै। इस श्लोकमें 'त्रिरम्भः' यह पद लिखाहै इससे चतुर्गुण जल इसमें नहीं लेना चाहिये। मिश्री, सहत, घी, दूध, पीपल इन औषधियोंका योग प्यास, पीडा, श्वास, खांसी, ज्वर इनको दूर करनेवाला है। इसकी विधि यह है–पीपरोंसे अठगुना दूध और दूधसे चौगुना जल मिलाकर क्षीरपाक करे। क्षीरमात्र शेष रहजानेपर मिश्री और घृत समान मात्रा मिलाकर और दुग्धके ठण्डे



होजानेपर घृतसे आधी मात्रा सहतकी मिलाकर पीना चाहिये। क्योंकि गरम दूधमें सहत मिलाकर पीना विषके समान है, इसलिये गरम दूध ठंडा होजावे तब सहत मिलाकर पीना चाहिये। घी और सहत भी समान मात्रा विषके समान होतीहै इसलिये घी और सहत समान मात्रा नहीं खाना चाहिये। इन दोनों योगोंकी मात्रा यथाबल देनी चाहिये। और इन दोनों योगोंको पुराने विषमज्वरमें देना चाहिये तरुणज्वरमें नहीं देना चाहिये। क्योंकि तरुणज्वरमें क्षीर देना निषिद्धहै॥ ३४॥

पिप्पल्यग्निपयोदवत्सकविषासिंहीशिवासारिवा-
तिक्तातामलकीमहौषधजलत्रायंतिकाभिर्हविः॥
द्राक्षाबिल्वहिमस्थिराभिरपि तत्सिद्धं शिरोरुग्ज्वरा-
रुच्यं सद्वयतापगुल्मजठरव्यापद्धलीमं जयेत्॥ ३५॥

पिप्पलीति॥ पिप्पल्यादिभिः सिद्धं पक्कं तद्धविर्घृतम् शिरोरुगादिसप्तकं जयेत्। पिप्पली कृष्णा, अग्निश्चित्रकः, पयोदो मुस्ता, वत्सकः कुटजः, विषातिविषा, सिंही बृहती, शिवा धात्री, सारिवा गोपी, तिक्ता कट्वी, तामलकी भूधात्री, महौषधं विश्वा, जलं बालकं, त्रायंतिका पालिनी, द्राक्षा गोस्तनी, बिल्वं श्रीफलं, हिमं चंदनं, स्थिरा शालिपर्णी। पिप्पल्यादीनां कल्कक्वाथाभ्यां साधितमित्यर्थः। अत्रोपयुक्तपरिभाषा–"मानानुक्तौ संप्रदायात्प्रस्थमात्रं हविः स्मृतम्॥ स्नेहपाके त्वमानोक्तौ चतुर्गुणविवर्द्धितम्॥ कल्कं स्नेहं द्रवं योज्यमधीते शौनकः पुनः" इत्यादि बोध्यम्। गुल्महलीमयोरत्रोपादानं विषमज्वरे प्रायः संभवात् गुणस्य कथनप्रसंगाद्वा। शिरोरुक् शिरःपीडा, ज्वरो विकारः, अरुचिरन्नानभिलाषः, अंसद्वयतापः स्कंधद्वये संतापः, गुल्मः हृद्बस्त्योरंतरे ग्रंथिः, जठरव्यापत् उदरव्यथा, हलीमः पांडुविशेषः॥ ३५॥

पीपर छोटी, चित्रक, मोथा, इन्द्रजौ, अतीस, कटेरीकी जड, आँवला, सारिवा, कुटकी, भूम्यामलकी, सोंठ, नेत्रवाला, बनफसा, मुनक्का, बेलगिरी, चन्दन, शालपर्णी इन औषधियोंके कल्क और क्वाथसे सिद्ध कियाहुआ घृत शिरकी पीडा, ज्वर, अरुचि, दोनों कन्धोंके ताप, गुल्म, उदरपीडा, हलीमक इनको दूर करताहै॥ ३५॥

प्रागुक्तनस्यांजनधूपयोगैर्जीर्णज्वरः शांतिमुपैति सद्यः॥
गौरीगिरीशग्रहगोगुरूणां पूजाप्रणामादिभिरप्यजस्रम्॥ ३६॥

प्रागुक्तेति ॥ प्राक् पूर्वम् उक्ता ये नस्यांजनधूपास्तेषां योगैः सद्यः शीघ्रं जीर्णज्वरः शांतिमुपैति नश्यति । जीर्णेति समीपिजीर्णेयं विधिः प्रयोज्य इति द्योतयितुम् । तल्लक्षणं "त्रिःसप्ताहं व्यतीतस्तु ज्वरो यस्तनुतां गतः ॥ प्लीहाग्निसादौ कुरुते स जीर्णज्वर उच्यते" तथा-"न शाम्यति ज्वरो यस्तु पक्षादूर्ध्वं शरीरिणाम् । मंदवेगानुबद्धस्तु स ज्ञेयो जीर्णतां गतः ॥" इति । गौर्यादीनां पूजाप्रणामादिभिरपि ज्वरः शान्तिमुपैति । कथमजस्रं यथा भवति तथा "संपूजयेद्विद्वान् गावो देवानीशानमंबिकां च " इति श्रुतेः ॥ ३६ ॥

पहिले कहेहुए नस्य, अञ्जन, धूपोंके योगोंसे जीर्णज्वर शीघ्र शान्त होजाताहै । और पार्वती महादेव सूर्यादिग्रह गुरुओंको पूजा प्रणाम जप आदिकोंसे भी निरन्तर जीर्णज्वर चलाजाताहै ॥ ३६ ॥

प्रणयति सुतरां यश्चत्वरांभःश्मशान-
प्रभृतिषु शिवसद्मन्युग्रदेवालये वा ॥
प्रलपनमलमूत्रोत्सर्गनिष्ठीवनादिं
ज्वर उरुतरवेगः पीडयेत्तं तृतीयः ॥ ३७ ॥

चत्वरादौ प्रलापाद्यपराधात् कुपितभूताभिषंगेण तृतीयको भवतीति द्योतयितुं तत्प्रविधानं चोपदेष्टुं तज्जत्वमाह-प्रणयतीति ॥ यः पुमान् चत्वारादिषु ग्राम्याणां बहिः कथास्थानं चत्वरः । अम्भ इति तडागाद्युपलक्षणम् । शवायनमत्र श्मशानम्, प्रभृतिपदेन गृहावेष्टितवृक्षचतुष्पथादिः । शिवसद्म शिवालय उग्रदेवालयो वा । उग्रो देवो हनुमदादिस्तस्यालये स्थाने प्रलपनादि सुतराम् अतिशयेन प्रणयति करोति । प्रलपनमसंबद्धभाषणं, मलमूत्रत्यागः निष्ठीवनं थूत्कृतिः । आदिशब्दान्मैथुनहास्यगीताक्षतथच्छेदनादि । उरुतरो बहुलो वेगो यस्य सः तृतीयो ज्वरः तं नरं पीडयेत् ॥ ३७ ॥

जो मनुष्य चत्वर (चौराहा) तालाब, नदी, श्मशान आदि स्थानों तथा शिवालय, भैरव, हनूमान्, चण्डी, आदिकोंके स्थानोंमें असत्यभाषण विष्ठा मूत्रका त्याग, थूकना मैथुन, हास्य आदि दुष्टकर्मोंको करताहै अत्यन्त प्रचण्ड वेगयुक्त तृतीय ज्वर उस मनुष्यको पीडित करता है ॥ ३७ ॥

करे करटजंघाया मूलं मिहिरवासरे ॥
कुसुंभशोणसूत्रेण स्वप्रमाणेन धारयेत् ॥ ३८ ॥



प्रथमं युक्तिव्यपाश्रयमाह-कर इति ॥ करटजंघाया काकजंघाया मूलं करे हस्ते मिहिरवासरे सूर्यदिने स्वप्रमाणेन आत्मप्रमाणेन कुसुमेन शोणरक्तं यत् सूत्रं तेन सूत्रेण कार्पासतंतुना धारयेत् । तृतीयकनाशायेति प्रकरणाल्लभ्यते । वायसजंघामूलं सूर्यदिने तृतीयकं हन्यात् । कटिबद्धमात्मसंमितं कुसुंभिकारक्तसूत्रेणेति योगमालायाम् ॥ ३८ ॥

रविवारको अपने शरीर प्रमाण सूतको कुसूमके फूलोंके लाल रंगमें रंगकर काकजंघाकी जडमें बांधकर हाथमें बांधनेसे तृतीय ज्वर दूर होजाताहै ॥ ३८ ॥

समाक्षिकसितः शीतः शीतमुस्तमहौषधैः ॥
धान्यच्छिन्नरुहोशीरैः क्वाथ एकांतरं जयेत् ॥ ३९ ॥

समाक्षिकेति ॥ शीतादिभिर्धान्यादिभिः कृतः क्वाथः एकांतरं तृतीयकं जयेत् । कीदृशः, शीतः शीतलः । पुनः कीदृशः, माक्षिकं मधु, सिता शर्करा तत्सहितः । शीतं चंदनं, मुस्तं घनं, महौषधं शुंठी, धान्यं धान्याकं, छिन्नरुहा गुडूची, उशीरं वारणमूलम् ॥ ३९ ॥

चन्दन, नागरमोथा, सोंठ, धनियां, कटेरी, खस इनके क्वाथमें सहत और मिश्री मिलाकर पीनेसे एकान्तर (एकाहिक) ज्वरको दूर करताहै ॥ ३९ ॥

यजुर्वेदोदितं रुद्रसूक्तं मृत्युंजयं जपन् ॥
पुरसिद्धार्थसर्पींषि जुह्वदेकान्तरं जयेत ॥ २४० ॥

दैवव्यपाश्रयमाह-यजुर्वेदेति ॥ यजुर्वेदोदितं यजुर्वेद उदितम् उक्तं रुद्रसूक्तं 'नमस्ते रुद्र मन्यव' इत्यादिकं मृत्युंजयं 'त्र्यंबकं यजामहे' इत्यादिकं जपन् सन् पुनः किं कुर्वन् पुरसिद्धार्थ सर्पींषि जुह्वत् सन् । पुरो गुग्गुलुः, सिद्धार्थः सर्षपः, सर्पिर्घृतम्, एतान् जुहुयात् । जुह्वदित्यत्र नाभ्यस्ताच्छतुरिति नुम्निषेधात्र जुह्वन् । होमश्च मृत्युंजयेन एकांतरं तृतीयकं जयेत् । तथा च कर्मविपाके " कुर्यात्तत्परिहारार्थं विधिना रुद्रपूजनम् । जपजाप्यं च वै शक्त्या सहस्रस्नपनं तथा ॥ गुग्गुलं सर्षपानाज्यं यच्चान्यदपि सुप्रियम् ॥ होमयेद्देवदेवस्य महादेवस्य तुष्टिदम् ॥ त्र्यंबकेति च मंत्रेण भूरि भोज्यं च कारयेत् ॥ एवं यात्यभियैकांति तृतीयो नाम वै ज्वरः ॥ " इति ॥ २४० ॥

यजुर्वेदमें कहेहुए 'नमस्ते रुद्र मन्यव' इत्यादि रुद्रसूक्त तथा "ॐत्र्यम्बकं यजमाहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्" इस मृत्युञ्जयका जप करनेवाले तथा गूगल, सरसों, घृत इनका हवन करनेवाले मनुष्यका तृतीयज्वर दूर होजाताहै ॥ २४० ॥

ज्वरस्य दिवसे रवेरथ शिवस्य वा पिप्पलं
जलैः समभिषिंच्य तं हरिधिया समालिंग्य च ॥
प्रदक्षिणमवभ्रमन्नमलया मुहुः श्रद्धया
तृतीयकनिपीडितः सपदि संमुदं विंदति ॥ ४१ ॥

ज्वरस्येति ॥ तृतीयकनिपीडितः पुमान् सपदि शीघ्रं संमुदमारोग्य जनितं हर्षं विंदति लभते विद्लृलाभे तुदादिः शभ्यःश इति शःप्रत्ययः, नामिति नुम्। किं कुर्वन् । अमलया निर्मलया श्रद्धया ज्वरस्य दिवसे यस्मिन्दिने ज्वर आगच्छति तस्मिन्दिने। अथवा रवेर्दिने, अथवा शिवस्य कृष्णचतुर्दश्यां जलैः पिप्पलं समभिषिच्य सिक्त्वा। च पुनः हरिधिया विष्णुबुद्ध्या तं पिप्पलं समालिंग्य च मुहुः प्रदक्षिणम् अवभ्रमन् सन् प्रदक्षिणां कुर्वन्नित्यर्थः। मुहुरिति एकविंशतिवारोपलक्षणम्। उक्तं च "चैत्याश्वत्थं ज्वरी गत्वा सुपवित्रः शुभावरः। एकविंशतिवारं च प्रकरोति प्रदक्षिणम् ॥" इति प्रमदसंमदौ हर्षे इति साधुः ॥ ४१ ॥

अत्यन्त श्रद्धासे जिस दिन ज्वर आताहै उस दिन, अथवा रविवारको, अथवा चतुर्दशीको, जलसे पीपलको सींचकर तथा पीपलको विष्णुबुद्धिसे आलिङ्गन कर ( चिपटकर ) पीपलकी इक्कीस बार प्रदक्षिणा करनेवाला तृतीयक ज्वरसे पीडित पुरुष शीघ्र आरोग्यसे उत्पन्न हुए हर्षको प्राप्त होताहै। अर्थात् तृतीयक ज्वर उस पुरुषका दूर होजाताहै ॥ ४१ ॥

कलशैरेकविंशत्या तत्र कुर्वीत तर्पणम् ॥
मंत्रेणानेन विधिवत्तिलपुष्पकुशान्वितैः ॥ ४२ ॥

कलशैरिति ॥ तत्र पिप्पले एकविंशत्या कलशैर्घटैस्तर्पणं कुर्वीत। अनेन वक्ष्यमाणेन मंत्रेण विधिमाह-विधिवद्यथा भवति तथा किंभूतैः कलशैः। तिलपुष्पकुशैरन्वितैस्तर्पणमित्यनेन सजलैरिति लक्ष्यते। तथा च कर्मविपाके "तन्मूले च जलं दद्याज्ज्वरवानेकविंशतिः। मंत्रेणानेन विधिवत्सतिलः सोत्तरीयकः" इति ॥ ४२ ॥

वक्ष्यमाण मन्त्रसे विधिपूर्वक तिल, फूल और कुशायुक्त जलसे भरेहुए इक्कीस कलशोंसे पीपलको स्नान कराताहै वह मनुष्य शीघ्र तृतीयक ज्वरसे मुक्त होजाताहै ॥ ४२ ॥

ॐ नमो बोधरूपाय विष्णुरूपाय ते नमः ॥
ज्वरं हर महाभाग तृतीयं मम बाधकम् ॥ ४३ ॥



मंत्रमाह-ॐनमः इति ॥ हे महाभाग बोधरूपाय अश्वत्थरूपाय ते तुभ्यं नमः। विष्णुरूपाय भगवद्रूपाय ते तुभ्यं नमोस्तु। त्वं मम बाधकं पीडाकरं ज्वरं तृतीयकज्वरं हरेति मंत्रार्थः ॥ ४३ ॥

'ॐ नमो बोधरूपाय' इस मंत्रसे तर्पण करै। विष्णुस्वरूप अश्वत्थ ( पीपल ) को नमस्कार है। हे महाभाग! मुझको पीडा देनेवाले तृतीयज्वरका नाश करो ॥ ४३ ॥

ज्वरमेतेन संतर्प्य समाश्लिष्यन्निमं जपेत् ॥
महाज्वर महाभाग महाबलपराक्रम ॥ ४४ ॥
रुद्रांश रुद्ररूपोऽसि तृतीयक महाज्वर ॥
त्यज मां घोररूपेण पिप्पलेत्र स्थिरो भव ॥ ४५ ॥

ज्वरमिति ॥ एतेन पूर्वोक्तेन मंत्रेण ज्वरं संतर्प्य समाश्लिष्यन् आलिंगन् इदं वक्षमाणं मंत्रं जपेत्। हे महाज्वर हे महाभाग! हे महाबलपराक्रम हे रुद्रांश! त्वं रुद्ररूपः असि। हे तृतीयक महाज्वर! त्वं मां त्यज हे भूतभव्येश! अत्र पिप्पले त्वं स्थिरो भव ॥ ४४ ॥ ४५ ॥

इस मंत्रसे ज्वरको तृप्त करके तथा ज्वररूप पीपलसे आलिंगन करके इस मंत्रका जप करे। "महाज्वर! महाभाग!" यह मंत्र है, इसका अर्थ यह है-हे महाज्वर! हे महाभग! हे महाबल! हे महापराक्रम! हे रुद्रके अंश! तू रुद्रका स्वरूप है। हे तृतीयक महाज्वर! तू अपने घोर स्वरूपसे मुझको छोड और पीपलपर स्थित हो ॥ ४४ ॥ ४५ ॥

ज्वरमश्वत्थे मुक्त्वा तन्मूले जलसंभृतं नवं कलशम् ॥
असितं करंभसंभृतशरावपिहितं ततो दद्यात् ॥ ४६ ॥

ज्वरमिति ॥ पुमान् ज्वरी ज्वरं कथं भूतं 'ज्वरस्त्रिपादस्त्रिशिराः' इत्याद्युक्तं तृतीयकज्वरमूर्तिं वा। अश्वत्थे मुक्त्वा तत्त्यागं मनसि संभाव्येति यावत्। तस्याश्वत्थस्य मूले जलेन संभृतं पूरितम् असितं कृष्णवर्णं नवं कलशं ततः पश्चात् दद्यात्। कीदृशं कलशं करंभेणं दध्योदनेन संभृतो पूरितो यः शरावो वर्द्धमानकस्तेन पिहितं छादितम् ॥ ४६ ॥

पीपलपर ज्वरको छोडकर पीपलकी जडमें जलसे भरेहुए नवीन काले कलशको दही और भातसे भरेहुए सरवासे ढककर देवै ॥ ४६ ॥

प्रगृह्णीष्व बलिं चेमं तृतीयक महाज्वर ॥
आतुरस्य सुखं सिद्धिं मे प्रयच्छ महाबल ॥ ४७ ॥

दानमंत्रमाह-प्रगृह्णीष्वेति ॥ हे तृतीयक हे महाज्वर! महांश्चासौ ज्वरश्च सन्महदितिसमासः आन्महत इत्यात्वं, त्वम् इमं बलिं प्रगृह्णीष्व गृहाण। हे महाबल! आतुरस्य रोगिणो मम सुखं सिद्धिं यच्छ देहि। दाण् दाने पाघ्रेति यच्छादेशः। शेषं स्पष्टम् ॥ ४७ ॥

कलशको इस मन्त्रसे देवे-प्रगृह्णीष्वेति-हे तृतीयक महाज्वर! इस बलिको ग्रहण करो। और हे महाबल! मुझ रोगीको सुख और सिद्धि प्रदान कीजिये ॥ ४७ ॥

अथैकविंशतिं विप्रान् सप्त त्रीन् वा यथासुखम् ॥
भोजयित्वा गृहं गच्छेन्मौनी पश्यन्निजौ पदौ ॥ ४८ ॥

अथेति ॥ ज्वरी एकविंशतिं विप्रान् सप्तविप्रान् यथासुखं द्रविणशक्तिमनतिक्रम्येति यावत्। एकविंशतेरधिकानेकमपि च लभ्यते भोजयित्वा अर्थादश्वत्थसमीपे गृहं गच्छेत् निजौ आत्मीयौ पदौ पश्यन्निति पर्यावृत्य इतस्ततोऽवलोकननिषेधार्थं पदशब्दः पादशब्दः समानार्थः। कीदृशः ज्वरी मौनी मौनमस्यास्तीति मौनी पश्यन्। दृशिर् प्रेक्षणे पाघ्राध्मेति पश्यादेशः। "ततः स्वगृहमागच्छन् न पृष्ठमवलोकयेत्। अधोदृष्टिस्तथा मौनी भवेदज्वरमात्मनः" इति कर्मविपाके ॥ ४८ ॥

इसके अनन्तर सात सात ब्राह्मणोंको तीन जगह बैठाकर एवं इक्कीस ब्राह्मणोंको पीपलके नीचे भोजन कराकर यथाशक्ति दक्षिणा देकर मौनी (चुप) होकर अपने पैरोंको देखताहुआ (अर्थात् इधर उधर न देखता हुआ केवल पैरोंको ही देखताहुआ) रोगी अपने घरको जावे। महादेवसे ज्वरकी उत्पत्ति होनेके कारण देवव्यपाश्रय चिकित्सा कही है ॥ ४८ ॥

व्रजति यः सततं मकरध्वज-
प्रजनितोरुमतिभ्रममोहितः ॥
बहुविधाशुभधामरजस्वला-
मथ तदुज्झितमत्ति पिबत्यपि ॥ ४९ ॥

अथ चातुर्थकमधिकृत्याह-व्रजतीति ॥ यो नरो रजस्वलां स्त्रीं व्रजति गच्छति तया सह संभोगं करोतीति यावत्। अथ तया उज्झितं त्यक्तम् अर्थादन्नं पानं च अन्नादिकमत्ति भक्षयति। उदकादिकं पिबति अपि। तदुज्झितामित्यत्र सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। कीदृशो नरः सततं निरंतरं मकरध्वजेन कामेन प्रजनितः उत्पादितो यः उरु भूयान् मतिविभ्रमस्तेन मोहितो विचित्ततां प्राप्तः सः। बहुविधाशुभ-



धाम बहुविधं नानाप्रकारं यद् अशुभम् अकल्याणं तस्य धाम स्थानभूतां रजस्वलां व्रजति तया क्रीडति, तद्भुक्तावशिष्टं भुनक्ति जलादिकं च पिबति रजस्वलागमनेन हि बहून्यशुभानि भवंतीति ॥ ४९ ॥

जो कामदेवसे उत्पन्नहुए बुद्धिभ्रमसे मोहित मनुष्य अनेक प्रकारके अशुभ लक्षणोंकी स्थान जो रजस्वला स्त्री उसके साथ सम्भोग करताहै और उसी रजस्वलाका दियाहुआ पानी वगैरह पीता है ॥ ४९ ॥

हसति रोदिति चैत्यतरोरधः
समलमुज्झति थूत्कुरुतेऽपि च ॥
कुपितभूतभवस्त्वरितं ज्वर-
स्तमरमाश्रयतीह चतुर्थकः ॥ २५० ॥

हसतीति ॥ यो नरश्चैत्यतरोः ग्रामाद्बहिर्देवताधिष्ठितवृक्षस्याधः अधःप्रदेशे हसति, रोदिति, समलं मलमूत्रादियुक्तं वस्तूज्झति त्यजति। अपि च थूत्कुरुते ष्ठीवति। चैत्येति श्मशानादीनां हसतीति गायनादीनामुपलक्षणम्। इह लोके एतैः प्रकारैः कुपितो यः भूतः पिशाचः तस्माद्भवतीति। कुपितभूतभवः चतुर्थको ज्वरस्त्वरितं शीघ्रम्, अरम् अत्यर्थं, तं नरम् आश्रयति। "क्षुन्निष्ठीवनोच्छिष्टमकालस्थानवर्तिनम्। संपीडयंति ते प्रेता ज्वररूपेण वै नरम्। स्वगोत्राऽपरगोत्रा वा पूर्वसापेक्षकाश्रये" इति ॥ २५० ॥

और जो ग्रामसे बाहिर देवता अथवा पीपल आदि वृक्षोंके नीचे हँसता रोता वा गाता है, विष्ठा या मूत्र करताहै अथवा थूकताहै। इत्यादि कारणोंसे भूत प्रेतादि कुपित होतेहैं और उनके कुपित होनेसे उत्पन्नहुआ चातुर्थक ज्वर शीघ्र ही अत्यन्त वेगसे मनुष्यको दुखित करताहै ॥ २५० ॥

इति तदातुर आशु तदागमे
यदभिलष्यति तद्ध्रुवमर्पयेत् ॥
रुचिरचंदनचंपकमल्लिका-
कुसुममांससुराक्तशरादिकम् ॥ ५१ ॥

प्रतिविधानमाह-इतीति ॥ इति हेतोः तेन चातुर्थकेन आतुरः पुमान् तस्य चातुर्थकस्यागमे आगमनसमये यद्रुचिरं चंदनादिकम् अभिलष्यति तत्तस्मै ध्रुवम् आशु अर्प्पयेत्। चम्पकेत्यादिपुष्पोपलक्षणम्।

"यवागूः कृशरा ज्ञेया तिलतण्डुलमाषजा । तिलतण्डुलजा वापि यवागू कृशरा मता ॥" आदिशब्दाद्दध्यादि । तथा च कर्मविपाके- "जायते तत्र यत्रेच्छा पुण्यतांबूलचंदनैः ॥ अति नानाप्रकारेण तत्तस्य प्रतिपादयेत् ॥ ५१ ॥

इस कारण चातुर्थक ज्वरसे पीडित मनुष्य उस ( ज्वर ) के आगमन कालमें चम्पा, चमेलीके फूल, मांस, शराव खिचडी, दही आदि जिन २ पदार्थोंकी अभिलाषा करे वही वही देना चाहिये । क्योंकि उस समय भूत प्रेतादिकों के आक्रमणसे पदार्थोंकी अभिलाषा करताहै उनके प्रसन्नताके लिये वही पदार्थ देना चाहिये ॥ ५१ ॥

असितधेनुमशेषपरिस्कृति-
प्रविलसद्द्युतिमुत्तमलक्षणम् ॥
द्विजवराय ददीत सदीडनैः
प्रमुदिताय हिताय सदक्षिणाम् ॥ ५२ ॥

असितेति ॥ सद्भिरुत्तमैः स्तवनैः प्रमुदिताय संतुष्टाय विद्यातपःशीलैः श्रेष्ठाय द्विजवराय ब्राह्मणाय असितधेनुं कृष्णां गां ददीत । चातुर्थकार्त इति शेषः । कीदृशीम् । अशेषा समग्रा परिस्कृतिरलंकृतिरलंकारस्तेन प्रविलसती दीप्यमाना द्युतिर्यस्ताम् । पुनः कीदृशीम् । उत्तमं लक्षणं यस्याः सा ताम् । पुनः कीदृशीम् दक्षिणाभिः सहिताम् । किमर्थं ददीतेत्याहुः-हिताय आरोग्यार्थम् । तथा च कर्मविपाके-"तत्प्रीत्यर्थं च कृष्णां गां दद्याद्विप्राय वै ततः" इति ॥ ५२ ॥

सम्पूर्ण अलंकारों ( गहने ) से भूषित देदीप्यमान दक्षिणा युक्त काली गौ, स्तुति प्रार्थना पूर्वक विद्या तप शीलादि गुण युक्त ब्राह्मणको अपने आरोग्यकी अभिलाषासे दान करना चाहिये ॥ ५२ ॥

सकलसंसृतिदुःखहरं हरं
वृजिनसंतमसौघहरिं हरिम् ॥
अहरहः प्रयतः स्वयमर्चयन्
नयति नाशमयं विपदन्वयम् ॥ ५३ ॥

सकलेति ॥ अयं चातुर्थकी नरः प्रयतः शुचिः सन् विपदां दुःखानां अन्वयः संतानो यस्मात्तं चातुर्थकमिति यावत् नाशं नयति । किं कुर्वन्, अहरहः प्रतिदिनं स्वयं हरं हरिम् अर्चयन् पूजयन् सन्, कीदृशं हरम् । सकलं यत्संसृतिदुःखं तद्धरतीति तम् । कीदृशं हरिम् । वृजिनं पापं तदेव संतमसं विश्वक् अंधकारस्तस्य य ओघः समूहः तस्य हरिं हरणशीलं हरिं श्रीकृष्णम् । "स्मरन्नारायणं विष्णुं वासुदेवं निरंतरम् ॥ मुच्यते ज्वरदोषेण पूजयित्वा हरिं हरम्" इति कर्मविपाके ॥ ५३ ॥



चातुर्थक ज्वरसे पीडित मनुष्य सम्पूर्ण संसारके दुःखके हरनेवाले श्रीशिवजी महाराजको तथा सम्पूर्ण पापरूपी अन्धकारके समूहके नाश करनेवाले श्रीकृष्णचन्द्रको नियमपूर्वक प्रतिदिन स्वयं पूजा करता हुआ चातुर्थक ज्वरकी विपत्तिके समूहका नाश करताहै ॥ ९३ ॥

अथ तृतीयचतुर्थकसंज्ञयोरुपशमाय विधिं ज्वरयोरिमम् ॥
प्रविदधीत रवेर्दिवसे सुधीरपहृतावकरे पुरचत्वरे ॥ ५४ ॥

अथेति ॥ अथशब्दो वक्ष्यमाणविधिप्रारंभे मंगलकरणार्थः । सुधीः विद्वान् तृतीयचतुर्थकयोः ज्वरयोः उपशमाय शांतये इमं विधिं वक्ष्यमाणं प्रविदधीत कुर्वीत । रवेः सूर्यस्य दिवसे क प्रदेशे पुरस्य चत्वरो ग्रामाद्बहिर्ग्राम्याणां कथास्थाने नगरचतुष्पथे च । कीदृशे । अपहृतः संमार्जन्यादिभिर्दूरीकृतः अवकरः तृणगोमयादिसंचयो यस्मात्तस्मिन् ॥ ५४ ॥

इसके अनन्तर तृतीय और चातुर्थक ज्वरकी शान्तिके लिये यह विधि करनी चाहिये । बुद्धिमान् मनुष्य रविवारको दिनमें तिनका गोमय आदिकोंसे रहित नगरके बाहर चौराहेपर निम्न लिखित वस्तु रखे ॥ ९४ ॥

रुचिरमृन्मयकुंभकपालके
शुचिरनुत्तमधूपसुगंधिनि ॥
पृथुलपूपयुतां कृशरां सुरां
सतिमिपक्वपलं लकुचात्पलम् ॥ ५५ ॥
पृथुपृथग्विरचय्य विभासुरं
तदुपरि स्फुरदुच्चशिखाधरम् ॥
कलमकण्डननिर्मितमल्लिकं
घृतभृतं निदधीत च दीपकम् ॥ ५६ ॥

रुचिरेति ॥ शुचिः पुमान् अनुत्तमधूपेन अगुरुगुग्गुल्वादिजेन सुगंधिनि रुचिरं मनोज्ञं मृन्मयं कुंभस्य कपालकम् अधःशकलं तस्मिन्

पृथुलयूपयुतां पिष्टमधुयुतां यत् पोलिकावद्धिपाचितांमतिश्लक्ष्णां पृथुलैः विस्तीर्णैः पूपैः युतां कृशरां तिलतंडुलमाषजां सुरां मद्यं सतिमि तिमिभिर्मत्स्यैः सहितं पक्वं पलम् अजादिमांसं लकुचात् फलम् पृथ्विति ॥ एतत्सर्वं पृथक् परस्परं यथा न मिलति तथा विरचय्य रचयित्वा तदुपरि तेषां सर्वेषां कृशरादीनाम् उपरि दीपकं निदधीत स्थापयेत् । कीदृशं दीपकं, विभासुरं प्रज्वलंतम् । पुनः कीदृशम् । स्फुरदुच्चशिखाधरः स्फुरंती दीप्यमाना उच्चैर्या शिखा तां धरंतीति तम् । पुनः कीदृशम् । कलमानां शालिनां यत्कंडनं चूर्णं तेन निर्म्मिता रचिता मल्लिका आलयो यस्य तम् । पुनः कीदृशम् । घृतभृतं घृतेन भृतं पूर्णम् ॥ ५५ ॥ ५६ ॥

चातुर्थक ज्वरसे पीडित मनुष्य पवित्र होकर उत्तम अगर, तगर, गूगल आदि सुगन्धित वस्तुओंसे सुगन्धित सुन्दर मिट्टीके घडेके नीचे भाग यानी कोरे खपडेमें बडे २ पूआओंसे युक्त तथा खिचडी, मद्य, मछली, बकरी, वगैरहका मांस वडेरके फल ( लुचे ) इन सबको पृथक् २ रखकर और इनके ऊपर शालिके चावलके चूर्णका दीपक बनाकर उसमें घी भरकर बडी २ चार बत्तीको जलाकर देदीप्यमान ऐसे दीपकको धरे ॥ ५५ ॥ ५६ ॥

सुरभिशोणतरैः करवीरजैरपि जपाकुसुमैः कृतशेखरम् ॥
निशितशस्त्रकरस्तुतदुद्धरञ्ज्वरवराय हिताय निवेदयेत्॥५७॥

सुरभीति ॥ तत्कपालकम् उद्धरन् ज्वरवराय तृतीयकाय च चतुर्थकाय वा हिताय आरोग्यार्थं निवेदयेत् । कीदृशं तत् पात्रं सुरभीणि सुगंधीनि शोणतराणि अतिरक्तानि तैः करवीरजैः अपि परैः जपादिकुसुमैः कृतः शेखरो मुकुटो यस्य सः । स कीदृशः पुरुषः । निशितं तीक्ष्णं शस्त्रं करे यस्य सः । प्रहरणार्थेभ्यः परे निष्ठासप्तम्याविति निपातः । सप्तम्यांतस्य ज्वरेण तृतीया बाध्यते । "तत्र चूर्णं बलिं दद्यादुपर्युत्तार्य चत्वरे ॥ कृशराधूपदीपैश्च मत्स्यमांससुरादिकम् ॥ कृत्वा पुटकपात्रं तु धूपार्चनसमन्वितम्" इति ॥ ५७ ॥

फिर कपाल ( उस सामग्रीसे पूर्ण खपरे ) पर सुगन्धित अत्यन्त लाल कनेरके फूल और जपा ( गुडेल ) के फूलोंका मुकुट धारण करै । पुनः तीक्ष्ण शस्त्र ( तलवार ) हाथमें लिये हुए ज्वरसे ग्रसित मनुष्य पर ( इक्कीस बार ) उतार कर आरोग्यके निमित्त तृतीय और चातुर्थकके लिये गांवके बाहर चौराहेमें बलि देवे ॥ ५७ ॥

मंत्रो यथा—"प्रगृह्णीष्व बलिं चेमं बाधक त्वं महाज्वर ॥
आतुरस्य सुखं सिद्धिं प्रयच्छाशु महाबल" ॥ ५८ ॥

निवेदनमंत्रमाह-प्रगृह्णीष्वेति ॥ प्रगृह्णीष्व गृहाण हे महाज्वर चातुर्थक! हे बाधक! हे पीडाकारक! त्वम् इमं बलिं प्रगृह्णीष्व गृहाण। हे महाबल। हे बलिन्! आतुरस्य रोगिणो ममेति शेषः, सुखं सिद्धिं प्रयच्छस्व ॥९८॥

बलिदेनेका मंत्र यह है-प्रगृह्णीष्वेत्यादि-हे बाधा करनेवाले! महाज्वर! तृतीयक! वा चतुर्थक! तू इस बलिको ग्रहण कर। हे महाबलवन्! मुझ रोगीको शीघ्र सुख और सिद्धि प्रदान कीजिये ॥ ९८ ॥

हनुमतः स्नपनं प्रणयेत्ततः प्रततमुत्तमतैलघटीशतैः ॥
वरजपाकरवीरभवैर्नवैरविरलं प्रसवैः परिपूजयेत् ॥ ९९ ॥

अनंतरकरणीयमाह-हनुमत इति ॥ ततः पश्चात् प्रततम् अनवच्छिन्नं यथास्यात्तथा उत्तमतैलं सन्महदिति समासः । तिलतैलं तस्य घटीशतानि तैः हनुमतः स्नपनं स्नानं प्रणयेत्कुर्यात् । वरजपा उत्कृष्टा या जपा (वृक्षः) करवीरः प्रसिद्धस्तदुत्पन्नैर्नवैर्नूतनैः प्रसवैः पुष्पैः। अर्थाद्धनुमंतं अविरलं अतिसंलग्नं यथास्यात्तथा प्रपूजयेत। "अंजनीगर्भसंभूतं हनुमंतं प्रपूजयेत। तैलेनाभ्यंजनंकृत्वा सिंदूरकरवीरजैः॥ धूपैर्दीपैश्च नैवेद्यैः क्षिप्तान्नैः पूज्य भक्तितः । तस्य सूक्तानि यानि स्युस्तानि संकीर्त्तयन्स्वयम् ॥ नामषोडशकेनैव त्रिकालं स्तौति यो नरः॥ हनूमंतं स मुक्तः स्यात्तृतीयज्वरपीडया" इति कर्मविपाके ॥ ९९ ॥

इसके अनन्तर उत्तम तैलके सौ १०० कुल्लाओंसे हनूमान्जीको स्नान करावे गुढेल और लाल कनेरके नवीन नवीन बहुतसे फूलोंसे पूजा करे ॥ ९९ ॥

सुरभिधूपसदन्ननिवेदना-
दनुपठेदतिभक्तिपरः स्तुतिम् ॥
पवनसंभव मामव दुर्जया-
त्प्रबलभूत भयादहितं जहि ॥ २६० ॥

सुरभीति ॥ अतिभक्तौ परः पुमान् सुरभिधूपोऽगुर्वादिः सदन्नं शाल्यन्नं सुरभिधूपश्च सदन्नं च सुरभिधूपसदन्ने तयोर्निवेदयेत्। अनु पश्चात् स्तुतिं वक्ष्यमाणां पठेत् । स्तुतिमाहः-हे पवनसंभव वायुसुत दुर्जयाद्दुःखेन जेतुं शक्यात् प्रबलभूतभयात् मां अव रक्ष "भीत्रार्थानां भयहेतुः" इति अपादानसंज्ञा । अहितं तृतीयादिरूपं शत्रुज्वरं जहि त्वं नाशय ।

दुर्जय इति खस्प्रत्ययांतः जहीति हन्हिंसागत्योर्लोण्मध्यमैकवचनम् । हंतेर्जः इति हौजादेशः असिद्धवदत्राभात, इत्यसिद्धत्वाद्धेरतोहेरिति लुगभावः ॥ २६० ॥

और फिर सुगन्धित धूप और शालि चावलोंका भात निवेदन करै । पीछे अत्यन्त भक्तिमें तत्परहुआ इस स्तुतिको करै । हे पवनसुत ! इस बली ज्वरसे मेरी रक्षा करो । और इस बलवान् भूत तृतीयक वा चातुर्थकके भयसे उत्पन्न हुए अनिष्टको नाश कीजिये ॥ ६० ॥

प्रणिगदंति विदः प्रथमाश्रम-
प्रणयिनं यमनंग जितस्तुतम् ।
जितचतुर्विधरोगदरो गदा-
त्सहनुमान्ननु मामवतात्सदा ॥ ६१ ॥

प्रणिगदंतीति ॥ ननु सः हनुमान् सदा सर्वकालं मां रोगिणं गदात् अवतात रक्षतु । अव रक्षणे आशिषि लोट् । तुह्योरिति तातङादेशः । कीदृशो हनुमान् । जितश्चतुर्विधानां रोगाणां दरो भयं येन सः । ते च चतुर्विधा रोगास्तानाह-शारीरागन्तुमानसस्वाभाविकाश्च । तत्र शारीराः अन्नपानमूला वातपित्तकफशोणितसन्निपातादयः । आगंतवो अभिघातादिनिमित्ताः । मानसाः कामक्रोधादयः । स्वाभाविकाः पिपासाक्षुधामृत्युनिद्राप्रभृतय इत्युक्ताः । विद्रो विद्वांसो यं हमुमंतम् अनंगजितः श्रीमहेश्वरस्य तनुं शरीरं प्रणिगदंति कथयन्ति । एतेन भूतपतित्वमुक्तम् । कीदृशं हनुमंतम् । प्रथमाश्रमे ब्रह्मचर्याख्ये प्रणयः अनुरागो यस्य तम् । अनंगं जयतीत्यनंगजित् तस्य वदंतीति विदः । जि जये, विद ज्ञाने एताभ्यां सत्सूद्विषेति क्किप् । गद व्यक्तायां वाचि लट्, " नेर्गदनद० " इत्यादिना उपसर्गादुत्तरस्य नेर्णत्वम् ॥ ६१ ॥

विद्वान् जिन हनूमान्को ब्रह्मचर्यमें अनुराग रखनेवाले तथा कामदेवको जीतनेवाले महादेवका शरीर कहतेहैं । शारीरक, आगन्तुक, मानसिक, स्वाभाविक रोगोंके भयको जीतेहुए हनूमानजी अपनी गदासे हमेशा मुझको रक्षा करें ॥ ६१ ॥

पृथुलतुंगतरंगशताकुलं
यउदलंघयदर्णवमुज्जवः ॥
समवसीदति कीशकुलेऽखिले
निरवलेपमनाः स मुदेऽस्तु मे ॥ ६२ ॥



पृथुलेति ॥ स हनुमान् मम मुदे हर्षाय अस्तु । स कः । यः अर्णवं समुद्रम् उदलंघयत् । लंघिगत्तेर्ण्यंते लङि रूपम् । अर्णांसि तोयानि संति यस्मिन्सोर्णवः । अर्णसो लोपश्चेतिवप्रत्ययांतः । पृथुला महांतः तुंगा उच्चैस्तरंगवीचयस्तासां शतैराकुलं व्याप्तम् । कीदृशो हनुमान् । उद्गतो जवो वेगो यस्य सः । कस्मिन्सति अखिले समस्ते कीशकुले वानरकुले अवसीदति दुःखं प्राप्तवति सति । पुनः कीदृशः । निरवलेपमनाः । एवंविधेऽपि पराक्रमे निरहंकारचित्तः ॥ ६२ ॥

सम्पूर्ण बन्दरोंके समूहके दुःखित होनेपर अहंकार रहित जिन हनूमान्जीने बडी बडी ऊंची सैकडों तरङ्गोंसे व्याप्त समुद्रको उलांघाथा वह हनूमान्जी हमारे हर्षके लिये हों ॥ ६२ ॥

दशमुखस्य पुरे परितो वृते
जलधिना विधिना विवशीकृताम् ॥
जनकजामनुमोदयतिस्म यः
सपदि पत्युरुदंतसुधारसैः ॥ ६३ ॥

दशमुखस्येति ॥ यो हनुमान् पत्युः श्रीरामचंद्रस्य उदंतसुधारसैः संदेशामृतरसैः दशमुखस्य रावणस्य पुरे लंकायां जनकजां सीताम् अनुमोदयतिस्म आनंदयतिस्म । कीदृशे पुरे जलधिना समुद्रेण परितः वृते वेष्टिते । कीदृशीं जनकजाम् । विधिना दैवेन विवशीकृताम् । अविवशा विवशा कृतेति विवशीकृता विह्वलीकृतां ताम् । अभूततद्भावे च्विरिति च्विः प्रत्ययः । अस्य च्वावितीकारः । अनुमोदयतिस्मेति लिट् स्म इति भूते लट् ॥ ६३ ॥

जिन हनूमान्जीने समुद्रसे चारों तरफसे घिरीहुई दशमुख रावणकी पुरी लंकामें विधिवश पराधीन हुई श्रीजानकीजीको श्रीरामचन्द्रजीके कहेहुए अमृतरूपी वचनोंसे प्रसन्न कियाथा, उन हनूमानजीकी हम स्तुति करतेहैं ॥ ६३ ॥

पटुपुलस्त्यजदोर्व्रजपालिते
स्फुटमशोकवने पलभुग्वृते ॥
जनकजापदयोर्विनयान्नतं
तमनिलस्य सुतं सततं स्तुमः ॥ ६४ ॥

पटुपुलस्त्येति ॥ वयं तम् अनिलस्य वायोः सुतं सततं स्तुमः । कीदृशं तम् । अशोकस्य वने जनकजापदयोर्जानकीचरणयोर्विनयेन आ सम-

तात् नतं नम्रम् । कीदृशे अशोकवने । पद्योर्दक्षस्य पुलस्त्यजस्य रावणस्य दोष्णां भुजानां व्रजेन पालिते रक्षिते । पुनः कीदृशे पलं मांसं भुंजते इति पलभुजो रक्षांसि तैर्वृते युक्ते । स्तुम इति ष्टुञ् स्तुतौ ॥ ६४ ॥

बुद्धिमान् रावणकी भुजाओंके समूहसे रक्षित और मांसखानेवाले राक्षसोंसे युक्त अशोक वाटिकामें बैठीहुई श्रीसीताजीके चरणोंमें विनयसे जिन्होंने नमस्कार किया ऐसे श्रीहनूमान्जीकी हम स्तुति करतेहैं ॥ ६४ ॥

अपिनदुद्धतकौणपमंडलं
रिपुभिरक्षतमक्षमपि क्षणात् ॥
पलभुगीशपुरीमपि योऽदह-
त्स हरिरुग्रतरं ज्वरमस्यतु ॥ ६५ ॥

अपीति ॥ स हरिः हनुमान् उग्रतरं ज्वरम् अतिशयेन उग्र इति उग्रतरः स चासौ ज्वरश्च तम् अस्यतु । असु क्षेपणे दिवादिभ्यः श्यन् । हनुमान् उद्धतकौणपमंडलम् उत्कटराक्षससमूहम् अपिनत् अचूर्णयत् । रिपुभिः शत्रुभिर्देवादिभिः अक्षतम् अकृतव्रणम् अक्षमपि रावणपुत्रमपि क्षणात् अपिनत् । यो हरिः पलभुजां राक्षसानाम् ईशो रावणस्तस्य पुरीं लंकाम् अदहत् अधाक्षीत् । पिष्टसंचूर्णने लङ् । 'रुधादिभ्यश्च' इतश्चेतीकारलोपः । लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यडागमः, हल्ङ्याब्भ्यो० इति लोपः, षकारस्य जश्त्वेन डकारः वावसाने वकारो वा । अदहत् दह भस्मीकरणे लुङ् ॥ ६५ ॥

जिन वीर हनुमान्जीने उत्कट राक्षसोंके समूहको चूर्ण किया । देवताओंसे अक्षत ( व्रण-रहित ) रावणके पुत्र अक्षंको भी क्षणमात्रमें चूर्ण किया, राक्षसोंके स्वामी रावणकी पुरी लंकाको भी जलाया वह हनुमान्जी महाराज मेरे प्रचण्ड ज्वरको शीघ्र नाशकरें ॥ ६५ ॥

दशमुखापहृतप्रियमापिप-
न्मुदमुदंतशतैर्दयितोदितैः ॥
दशरथात्मजमापदि यः श्रये
तमनिशं विषमज्वरशांतये ॥ ६६ ॥

दशमुखेति ॥ अहं तं हनुमंतं विषमज्वरशांतये तृतीयकादिज्वरापहृत्यै अनिशं निरंतरं श्रये सेवे भजामीति यावत् । श्रिञ् सेवायां स्वरितञितः कर्त्रभिप्राये क्रियाफल इत्यात्मनेपदम् । तं कमित्याह-यो हनूमान् दयितायाः सीतायाः उदितैः उक्तैः उदंतानां वृत्तान्तानां शतैः

समूहैः दशरथात्मजं श्रीरामं मुदम् आपिपत् आपयामास । गतिबुद्धी-त्यादिना कर्तुः कर्मसंज्ञा । कीदृशं दशरथात्मजम् । दशमुखेन रावणेन अप-हृता प्रिया सीता यस्य सः तम् । आपिपत्-आप्ऌ व्याप्तौ हेतुमति चेति णिच् । लुङ् णिश्रीति च्लेश्चङादेशः । अजादेर्द्वितीयस्येति पी शब्दस्य चङीति द्वित्वे णेरनिटीति लोपे आडजादीनामित्याट् ॥ ६६ ॥

रावणसे प्रिया श्रीजानकीजीके हरण होनेपर ( उनका पता लगाकर ) उनके कहेहुए नाना प्रकारके वृत्तान्तोंसे जिन्होंने श्रीरामचन्द्रजीको आपत्कालमें प्रसन्न कियाहै उन हनुमान्जीकी विषमज्वरकी शान्तिके लिये हम स्तुति करतेहैं ॥ ६६ ॥

अपहर ज्वरमेनमुदित्वरं
मम चतुर्थकसंज्ञकमुद्धरम् ॥
कुपितभूतभवं भगवँस्तमो
रविरिव प्लवगप्रवरेश्वर ॥ ६७ ॥

अपहरेति ॥ हे प्लवगप्रवरेश्वर! प्लवगेषु वानरेषु प्रवराः श्रेष्ठास्तेषामी-श्वरस्तत्र संबुद्धिः हे भगवन् ! मम एनं चतुर्थकसंज्ञकं ज्वरम् अपहर नाशय । चतुर्थकसंज्ञा यस्य तं शेषाद्विभाषेति कप्, आपोन्यतरस्या-मिति ह्रस्वः । कीदृशं ज्वरम् उदित्वरम् उदितीत्येवं शीलम् । पुनः कीदृ-शम् । उद्धरम् उत्कृष्टम् । पुनः कीदृशम् । कुपितभूतभवं-कुपिता ये भूतास्तदु-त्पन्नम् । कः किमिव रविस्तम इव ॥ ६७ ॥

हे भगवन् हनुमन् ! जैसे सूर्य शीघ्र अन्धकारका नाश करताहै उसी तरह आप कुपित हुए भूतोंसे उत्पन्न इस प्रचण्ड चातुर्थक ज्वरको शीघ्र नाश कीजिये ॥ ६७ ॥

द्रुतसमाहृतसिद्धमहौषधी-
प्रशमतोल्बणलक्ष्मणहृद्व्यथः ॥
प्रथयताज्जगतामनिशं कपि-
प्रभुरनामयतां प्रभुतामपि ॥ ६८ ॥

द्रुतेति ॥ कपिप्रभुः वानरेश्वरः जगतां सर्वेषाम् अनिशं सर्वकालम् अनामयतां नीरोगत्वं विभुतां प्रभुत्वमपि प्रथयतात् विस्तरं कुरुतात् । कीदृशः । द्रुतं शीघ्रम् आनीता आहृता या सिद्धा चासौ महौषधी शल्यविशल्याख्या तया प्रशमिता उल्बणा दुःसहा लक्ष्मणस्य हृद्व्यथा

हृदयपीडा येन सः । महती चासौ औषधिश्च पृथुशब्दात्तत्करोतीति णिचि णाविष्टवदितीष्टवद्भावात्तत्सत इति रेफादेशे टिलोपे च " सनाद्यन्ता-धातवः" इति धातुत्वात् लोडादौ तुह्योरिति तातङ् ॥ ६८ ॥

जिन हनुमान्‌जीने शीघ्र उखाडी हुई सिद्ध औषधियोंसे लक्ष्मणजीकी हृदयपीडा शान्त कीथी वे बन्दरोंके स्वामी श्री हनूमानजी संसारके रोगोंको दूर करैं । और हममें प्रभुता ( सामर्थ्य ) प्रदान करैं ॥ ६८ ॥

हनुमंतमिति स्तुतिप्रसन्नं
प्रणिपत्य प्रचुरान्नदानतृप्तम् ॥
प्रणिधाय कपालभृन्निकायं
गृहमागत्य यथासुखं रमेत ॥ ६९ ॥

हनुमंतमिति ॥ स नरो यथासुखं रमेत क्रीडेत । किं कृत्वा । इति पूर्वोक्तप्रकारेण स्तुतिभिः प्रसन्नं हनुमंतं प्रणिपत्य नमस्कृत्य । पुनः किं कृत्वा । कपालभृतां योगिनां निकायं समूहं प्रचुरेण अन्नदानेन तृप्तं पूर्णं प्रणिधाय कृत्वेति यावत् । नेर्गदेति णत्वत् । गृहमागत्य गृहं प्राप्य ॥ ६९ ॥

इन स्तुतियोंसे प्रसन्न किये हुए हनुमान्‌जीको प्रणाम करके और योगियोंके समूहको अन्नदानसे प्रसन्न करके घरमें आकर मनुष्य ज्वररहित प्रसन्नहो क्रीडा करताहै ॥ ६९ ॥

इति तृतीयकचातुर्थकज्वरचिकित्सा ।

---

शीतपूर्व और दाहपूर्वके लक्षण ।

शीतादिर्दाहादिर्ज्वराविमौसन्निपातजौ ज्ञेयौ ॥
आद्ये त्वचि वातकफौ मध्ये पित्तं विपर्ययोऽन्यस्मिन्॥२७०॥

विषमज्वरस्यानेकभेदत्वं सूचयितुं चिकित्साविशेषं विधातुं च तद्विशेषानाह-शीतादिरिति ॥ इमौ विषमज्वरविशेषौ शीतादिदाहादि-ज्वरौ सन्निपाताज्जातौ विज्ञेयौ । आद्ये शीतपूर्वे ज्वरे वातकफौ त्वचि भवतः । मध्ये कोष्ठे पित्तं भवति । अन्यस्मिन् दाहादौ विपर्ययः वैपरीत्यं भवति । त्वचि पित्तं कोष्ठे वातकफाविति वैपरीत्यम् ॥ २७० ॥



शीतपूर्व और दाहपूर्व दोनों ही ज्वर सन्निपातसे पैदा होतेहैं । शीतपूर्वमें वात कफ त्वचामें रहतेहैं और पित्त कोष्ठस्थानमें रहताहै इसलिये शीत प्रथम लगताहै । और दाहपूर्वज्वरमें पित्त त्वचामें और वात कफ कोष्ठमें रहतेहैं, इसलिये दाहपूर्वज्वरमें दाह प्रथम होताहै ॥ २७० ॥

त्वचि कफमरुतौ स्थितौ विधत्तः
पुलकपुरस्सरमत्र शीतमुग्रम् ॥
अथ हिमविरतौ करोति पित्तं
भ्रममददाहतृषाम्लकांश्च मूर्च्छाः ॥ ७१ ॥

उक्तार्थे प्रमाणमाह-त्वचीति । अत्र शीतादिज्वरे त्वचि स्थितौ कफमरुतौ । पुलकपुरस्सरं रोमांचपूर्वम् उग्रम् उत्कटं शीतं विधत्तः कुरुतः । पुलकः पुरःसरो यत्र तम् । अथ पश्चात् हिमस्य विरतौ शीतांते पित्तं मध्ये वर्तमानम्-अर्थात्कोष्ठे स्थितं भ्रमादीन् मूर्छाश्च करोति । भ्रमश्चक्रगस्येव संभ्रमद्वस्तुदर्शनम् । मदः भंगाभक्षणस्येव ज्ञानम् । दाहः सर्वांगीणः । तृषा पिपासा, अम्लकोम्लोद्गारः, मूर्च्छा चेतनाच्युतिः ॥ ७१ ॥

त्वचा ( खाल ) में स्थित वात कफ रोमाञ्च खडे करके अत्यन्त शीतको पैदा करतेहैं । शीतके अनन्तर कोष्ठस्थानमें स्थित पित्त, भ्रम, मद, दाह, प्यास खट्टी डकार, और मूर्च्छाको पैदा करताहै ॥ ७१ ॥

त्वचि पित्तमत्र विरचय्य चिरा-
दतिदाहमस्य विरतौ कुरुतः ॥
कफमारुतौ सपदि मोहमपि
क्लमथुप्रसेकमपि शीतलता ॥ ७२ ॥

त्वचीति ॥ अत्र दाहादिज्वरे पित्तं त्वचि स्थितं भवति । किं कृत्वा चिरात् चिरकालपर्यंतम् अतिदाहं विरचय्य कृत्वा । अस्य विरतौ अस्य अतिदाहस्य विरतौ अंते कफमरुतौ सपदि शीघ्रं मोहमपि क्लमथ्वा-दीन् कुरुतः । शीतलस्य भावः शीतलता । अत्र तंत्रांतरोक्तो विशेषः " दाहादिर्दुस्तरस्तयोः " इति । एतेन शीतादेरर्थात्सुखसाध्यत्व-मुक्तम् ॥ ७२ ॥

और त्वचामें स्थित पित्त, बहुत कालतक दाहको पैदा करताहै और दाहके अनन्तर कोष्ठस्थित वात कफ शीघ्र मोह, खेद, प्रसेक ( मुंहमें पानी झरना ) और शरीरमें बाहिरसे शीतलताको करताहै ॥ ७२ ॥

शीतज्वरस्य सुरसार्जकशिग्रुपत्र-
लेपःकवोष्णसलिलेन शमाय शस्तः ॥
सेकस्तुषांबुसुरभीजलमस्तुसुक्तै-
रभ्यंजनं च लवणोत्तमसुक्ततैलैः ॥ ७३ ॥

चिकित्सामाह-शीतज्वरस्येति ॥ कवोष्णसलिलेन ईषदुष्णोदकेन सुरसादिपत्राणां लेपः शीतज्वरस्य शमाय नाशाय शस्तः उक्तः । सुरसा तुलसी, अर्जकः कुठेरकः, शिग्रुः सौभांजनः, एषां पत्राणि तैर्लेपः कवोष्णमितीषदर्थे वर्त्तमानस्य कुशब्दस्य कवादेशः । तुषांब्वादिभिरर्थात्कोष्णैः सेकः धारासंपातादिना परिषेकश्च शीतज्वरनाशाय शस्तः । तत्र तुषांबु तंडुलादितुषमाप्लुत्य कृतमुदकं कांजिकमित्येके । सुरभीजलं गोमूत्रं, मस्तु-" दध्नस्तु यदधस्तोयं तन्मस्तु परिकीर्तितम् " सुक्तं-" यन्मध्वादि शुचौ भांडे सगुडक्षौद्रकांतिकम् । धान्यराशौ त्रिरात्रिस्थं सुक्तं चक्रं तदुच्यते " इत्युक्तं लवणोत्तमसुक्तैर्मिश्रितैस्तैलैः । शाकपार्थिवादित्वान्मध्यमपदलोपः । अभ्यंजनमभ्यंगः । शीतज्वरशमाय शस्तः ॥ ७३ ॥

तुलसी, मरुआ, सैंजना इनके पत्तोंको गरम जलसे पीसकर लेप करनेसे शीतज्वर शान्त होजाताहै । धानके तुसका पानी तथा गोमूत्र तथा दहीका पानी तथा कांजी इनका सेक, सेंधानोन, सिरका और तेल इनका उबटना शीघ्र शीतज्वरको शान्त करताहै ॥ ७३ ॥

समुल्लसत्पृथुपुलकव्यथाकुलः
कुथाजिनामृदुपटरल्लकावृतः ॥
हसंतिकां झटिति निकाममाश्रयन्
जयत्ययं ध्रुवमपि शीतकज्वरम् ॥ ७४ ॥

समुल्लसदिति ॥ एवंविधः पुमान् अरम् अत्यर्थं ध्रुवमपि निश्चयमपि शीतकज्वरं जयति । कीदृशः, समुल्लसंति प्राप्नुवंति पृथ्वी बह्वी या पुलकव्यथा रोमांचव्यथा तया आकुलः विवशः कुथोऽतिघनो महान् कंबलः अजिनं मृगचर्म अमृदुपटो घनवस्त्रं लक्षणया स्वतः



कार्प्पासभरणेन वा अतिद्धरल्लकः कंबलस्तैरावृतः । किं कुर्वन् निकामं यथेच्छं हसंतिकां निर्धूमदीप्तांगारवतीं शकटिकामाश्रयन् सन् ॥ ७४ ॥

बहुत शीतसे व्याकुल पुरुष रुईका सौड, मृगचर्म, मोटा वस्त्र, मोटा कम्बल ओढे । और धूआँरहित दीप्त अंगारोंसे भरीहुई अंगीठीका सेवन करताहुआ मनुष्य शीघ्र शीतज्वरसे रहित होजाताहै ॥ ७४ ॥

मधुकनखलतागरुप्रपीतं
मधुमधुयुग्घरति प्रसह्य शीतम् ॥
गदहरमधुदूतिकागुडूची-
सहचरशक्रयवाग्निशैर्यकं वा ॥ ७५ ॥

मधुकनखेति ॥ मधु मद्यं मधु क्षौद्रं ताभ्यां युनक्ति, मधुकं यष्टी, मधुनखं सुगंधिनखं, लता प्रियंगुः, अगरुर्लोहम् एतत्प्रपीतं प्रशब्देन मद्यबाहुल्यं सूच्यते द्रवबाहुल्यं विना पानासंभवात् । शीतं हरति प्रसह्य बलात्कारेण । वा अथवा गदहरादि शीतं हरति । गदहरो राजवृक्षः, मधुदूतिका पाटला, गुडूची अमृता, सहचरः पीतपुष्पः कुरंटकः, शक्रयव इंद्रयवः, अग्निश्चित्रकः, शैर्यकं नीलपुष्पः, कुरंटकः, अस्यापि मद्यक्षौद्राभ्यां पानम् । एतेषां द्वंद्वः समाहारे ॥ ७५ ॥

मुरेठी, सुगन्धिनख, प्रियंगु, अगर ये औषधी सहत और मद्यके साथ पीहुई शीघ्र शीतको नाश करतीहैं । अमलतास, पाढर, गिलोय, सहजना, इन्द्रजौ, शैर्यक ( निर्गुंडी ) ये औषधी भी मद्य और सहतके साथ पीहुई शीतको दूर करतीहैं । यहां प्रशब्दसे मद्यकी अधिकता सूचन कीहै ॥ ७५ ॥

द्रोणपुष्पीरसः पीतः पयसा शीतमुल्बणम् ॥
हरेन्माक्षिकसंयुक्तो वार्ताकुस्वरसोऽथवा ॥ ७६ ॥

द्रोणपुष्पीति ॥ पयसा निष्कासित इत्यर्थात् द्रोणपुष्पीरसः पीतः सन् उल्बणं शीतं हरति । अथवा माक्षिकेण मधुना संयुक्तः पीतः सन् वार्त्ताकुस्वरसः बृहतीफलरसः शीतं हरेत् ॥ ७६ ॥

द्रोणपुष्पी ( गूमा ) को जलमें पीसकर रस निकालकर पीनेसे शीतज्वर दूर होताहै ॥ ७६ ॥

रसगंधशिलातालताम्रमेकत्र निर्मलम् ॥
पुटेन पाचयेच्चारु कारवेल्लीरसैरलम् ॥ ७७ ॥

रसगंधेति युग्मम् ॥ निर्मलं शुद्धं रसादिः । अत्र रसादीनां समभागता। रसः पारदः, गंधो गंधकः, शिला मनःशिला, तालं हरितालं, ताम्रं शुल्वम् एतत्सर्वम् एकत्र एकस्मिन्पात्रे कारवेल्लीरसैः पिष्टमित्यर्थात् अलम् । अत्यर्थं चारु यथा भवति तथा पुटेन पाचयेत् । पुटविधिश्च शराव-मध्ये गोलकं निधाय द्वितीयशरावेण पिधाय वस्त्रमद्भिस्त्रिः परिलिप्य अधश्चोर्ध्वं चोपलादिभिस्त्रिंशद्दत्त्वाग्निं स्वांगशीतं समुद्धरेदिति ॥ ७७ ॥

पारा, गन्धक, मनसिल, हरताल, ताम्बा इन सबको शुद्ध करके एकत्र मिलाकर करेलाके रसको मिलाकर पीसै । फिर गजपुटमें भस्म करे ॥ ७७ ॥

भावयेद्वटनीरेण सप्तकृत्वस्तु तद्रजः ॥
शीतज्वरं हरेत्सद्यो मरीचसुरसारसैः ॥ ७८ ॥

भावयेदिति ॥ तु पुनः तद्रजः पुटपाकनिर्घर्षणं वटनीरेण वटवल्कल-क्वाथेन सप्तकृत्वः सप्तवारान् भावयेत् । भावनाविधिश्च-" द्रवेण यावता द्रव्यमेकीभूयार्द्रतां व्रजेत् ॥ तावत्प्रमाणं निर्दिष्टं भिषग्भिर्भावनाविधौ" । इति भावनां कुर्यात् । संप्रदायाद्गुञ्जाद्वयं रसस्य, मरिचस्य माषस्तुलसी-रसस्य कर्ष इति मात्रया सह जग्धं सत् शीतज्वरं हरेत् जयेत् ॥ ७८ ॥

पुनः वटकी छालके क्वाथसे सात भावना देवें । यह रस दो गुंजापरिमाण तुलसीके पत्तोंका रस एक तोला मरिचके एक माषाके साथ देवे तो शीतज्वरको शीघ्र दूर करताहै ॥ ७८ ॥

ये पूर्वजन्मसु जनाः पिशुना नृशंसाः
संसारिणस्तु इह दुःखजुषो भवंति ॥
शीतज्वरेण च भृशं परिबाध्यमाना
नानाविधां जगति दुर्गतिमाप्नुवंति ॥ ७९ ॥

दैवव्यपाश्रयं कर्मोपदेष्टुमाह-ये पूर्वजन्मेति ॥ ये जनाः पूर्वजन्मसु अन्यजन्मसु पिशुनाः खलाः नृशंसा घातका भवंति ते जना इह जन्मनि दुःखजुषो भवंति । दुःखानि जुषंते सेवंते इति दुःखजुषः । ते कीदृशाः संसारिणः संसारो येषामस्तीति संसारिणः । च पुनः ते पुरुषाः भृशम् अत्यर्थं शीतज्वरेण परिबाध्यमानाः पीड्यमानाः संतः जगति संसारे नानाविधां दुर्गतिं दुष्टां गतिं प्लीहाग्निसादादिकाम् आप्नुवंति प्राप्नुवंति । आप्लृ व्याप्तौ । ये पुनः पूर्वजन्मनि पापकर्माणः पापाः पिशुनचेतसः ते भवेयुः । सदा शीतज्वरवंतः ॥ ७९ ॥



जो पूर्वजन्ममें मनुष्य दुष्ट और जीवहिंसा करनेवाले होतेहैं वही संसारी मनुष्य दुःख सेवन करतेहैं शीतज्वरसे अत्यन्त पीडित हुए अनेक प्रकारकी दुर्गतियोंको प्राप्त करतेहैं ॥ ७९ ॥

सहस्रसंख्यैः कलशैः सुतीर्थतोयाभिपूर्णैः स्नपयेन्मुरारिम् ॥
अभ्यर्चयेच्चन्दनपुष्पधूपदीपैः शुभैर्ब्राह्मणभोजनैश्च ॥ २८० ॥

तत्प्रतीकारमाह-सहस्रसंख्यैरिति ॥ सहस्रं संख्या येषां तैः सहस्र-संख्यैः कलशैः घटैः मुरारिं श्रीविष्णुं स्नपयेत् स्नानं कारयेत् । कीदृशैः कलशैः सुतीर्थतोयं गंगाजलं तैरभितः पूर्णैः । च पुनः चंदना-दिभिः मुरारिम् अर्चयेत् पूजयेत् । कीदृशैः चंदनाधिकैः । शुभैः उत्तमैः । च पुनः । ब्राह्मणभोजनैः अर्चयेत् । ब्राह्मणभोजने संख्या उक्ता भवति । तत्र मुख्या पंचाशज्ज्ञेया । ततः शक्तिरेव प्रमाणमिति कर्मविपाके ॥ २८० ॥

श्रीगंगाजीसे हजारों कलसे गंगाजलसे भरकर श्रीविष्णुभगवान्को स्नान करावे । और उत्तम फूल धूप दीपकोंसे पूजन करै । और ब्राह्मणोंको भोजन करावे ॥ २८० ॥

जप्त्वाथ जातवेदसमष्टाधिकमयुतमालये विष्णोः
हुत्वा च तद्दशांशं शीतज्वरतो विमुच्यते जंतुः ॥ ८१ ॥

जप्त्वेति ॥ जंतुः पुमान् अर्थाच्छीतज्वरी विष्णोः आलये विष्णुमंदिरे अष्टौ अधिकं यत्राष्टाधिकम् अयुतं सहस्रं जातवेदसं "जातवेदसे सुनवाम०" इत्यादिमंत्रं जपित्वा । च पुनः । तस्य जातवेदसमंत्रस्य दशांशं हुत्वा शीतज्वरतो विमुच्यते शीतज्वरान्मुक्तो भवति ॥ ८१ ॥

विष्णुके मन्दिरमें 'जातवेदसे सुनवाम" इस मंत्रका ८ आठ हजार जप करे । और जपका दशांश हवन करे तो शीतज्वरी मनुष्य शीतज्वरसे छूट जाताहै ॥ ८१ ॥

महेशमेवमभ्यर्च्य मुच्यते सुमहापदः ॥
आधयस्तं न बाधन्ते व्याधयः केऽल्पसाधनाः ॥ ८२ ॥

महेशमिति ॥ जंतुः पुमान् महेशं शिवम् अभ्यर्च्य सुमहापदो मरणा-दपि मुच्यते । आधयो मानसव्याधयस्तं नरं न बाधंते । अल्पं साधनं प्रतीकारो यासां ता व्याधयो रोगाः के क एत इत्यर्थः ॥ ८२ ॥

शिवजीका पूजन करनेसे मनुष्य बडी बडी आपत्तियोंसे छूट जाताहै और उस पुरुषको मानसिक व्याधि भी नहीं सतातीहैं । तब थोडे साधनवाली शारीरक बीमारी तो शीघ्र ही शान्त होजातीहैं ॥ ८२ ॥

यः सत्फलेषु शुभकर्मसु कोपनःस्या-
त्तस्यानलप्रतिभटः समुदेति देहे ॥
दाहज्वरस्तमपहर्तुमलं तदंगा-
द्गंगाधरांघ्रियुगपूजनजः प्रसादः ॥ ८३ ॥

य इति ॥ यः पुमान् संति शोभनानि फलानि येषां तेषु शुभकर्मसु नित्यनैमित्तिकेषु कुप्यतीति कोपनः द्वेषणः स्यात् । तस्य पुरुषस्य देहे अनलस्य वह्नेः प्रतिभटः प्रतिपक्षः लक्षणया सदृशः दाहज्वरः समुदेति उदयं प्राप्नोति। तदंगात् तस्य पुरुषस्य अंगात् तं दाहज्वरम् अपहर्तुं दूरीकर्तुं गंगाधरस्य रुद्रस्य अंघ्रियुगं चरणद्वयं तस्य यत्पूजनं पूजा तस्माज्जातः प्रसाद अलं समर्थः स्यादित्यर्थः ॥ ८३ ॥

जो मनुष्य अच्छे फलवाले नित्य नैमित्तिक शुभ कर्मोंमें द्वेष करतेहैं उनकी अग्नि कुपित हुई शरीरमें दाहज्वर पैदा करदेतीहै। उस पुरुषके शरीरसे दाहज्वरको दूर करनेके लिये महादेवके चरणकमलोंकी पूजासे उत्पन्नहुई प्रसन्नता सम्पादन करनी चाहिये । अर्थात् शिवजीकी पूजा करनी चाहिये ॥ ८३ ॥

य आततायी भवतीह मायी सुवृत्तविद्वेषणसक्तचित्तः ॥
स संततेन ध्रुवदुर्जयेन ज्वरेण जुष्येत सदोद्धुरेण ॥ ८४ ॥

सिंहावलोकितन्यायेन प्रसंगात्संततेपि कर्मजत्वमाह-य इति ॥ इह संसारे यः आततायी परवधे उद्यतो भवति "आततायी वधोद्यतः" इत्यमरः। यो मायी कपटवान् व्रीह्यादित्वादिनिः, भवति । कीदृशः यः पुरुषः सुवृत्तानां सदाचरणानां विद्वेषणे सक्तम् आसक्तं चित्तं यस्य सः नरः संततेन ज्वरेण सदा जुष्येत सेवेत । कीदृशेन संततेन ध्रुवदुर्जयेन उद्धुरेण उत्कृष्टेन संततेति सन्निपातादीनामुपलक्षणम् ॥ ८४ ॥

इस संसारमें जो मनुष्य दूसरेकी हिंसा करताहै, दूसरेके साथ कपट करताहै, सदाचारी मनुष्योंके साथ द्वेष करनेमें चित्त रखताहै, वह हमेशा दुःसाध्य और प्रचण्ड सन्ततज्वरसे पीडित रहताहै ॥ ८४ ॥

कलशमरुणमग्र्यं सर्पिषा संभृतं वा
मधुगुडजलतैलैस्तंदुलद्रोणसंस्थम् ॥
सितसिचययुगेनावेष्टितं वंशवृत्त-
श्रुतविमलतमाय ब्राह्मणाय प्रदद्यात् ॥ ८५ ॥



दानविधिमाह-कलशेति ॥ अरुणं रक्तम् अग्र्यम् उत्तमं कलशं ब्राह्मणाय प्रदद्यात् । अर्थात्संततज्वरी । कीदृशं कलशं सर्पिषा संभृतं पूर्णम् अथवा मध्वादिभिः पृथक् संभृतं तंदुलानां द्रोणं तत्रस्थं सितमुज्ज्वलं सिचययुगं वस्त्रयुगं तेनावेष्टितं परीतम् । कीदृशाय । वंशं कुलं, वृत्तमाचारः, श्रुतं वेदस्तैः शुद्धाय ॥ ८५ ॥

ताम्बेका श्रेष्ठ कलश घीसे भराहुआ अथवा गुड सहत जल तैल इनमेंसे किसी वस्तुसे भरा हुआ सोलह सेर चावलोंपर रखकर सफेद दो वस्त्रोंसे लपेटकर सत्कुलोत्पन्न सदाचारनिष्ठ वेदनिष्ठ ब्राह्मणको देवे ॥ ८५ ॥

सर्पिर्यवतिलैर्होमः सोमचूडस्य तुष्टये ॥
सुवर्णदक्षिणां यच्छन्मंत्रमेनमुदीरयेत् ॥ ८६ ॥

सर्पिरिति ॥ सोमचूडस्य चंद्रकलाधारिणः महादेवस्य तुष्टये सोमचूडस्येति विष्णोरप्युपलक्षणं मंत्रलिंगात् । सर्पिर्यवतिलैर्होमः कर्तव्यः । सुवर्णदक्षिणां यच्छन् ददत् सन् इमं मंत्रं वक्ष्यमाणम् उदीरयेत् । आदौ होमस्ततः कुंभदानं ततः सुवर्णदक्षिणाम् । तथा च कर्मविपाके-"नवं कुंभं समानीय मृन्मयं चाव्रणं दृढम् ॥ शुद्धं हि कर्णसहितं स्थापयेत्तंदुलोपरि ॥ तंदुलानां परीमाणं द्रोणव्यंजकमिष्यते ॥ विशुद्धविभवा ग्राह्याः श्वेतवस्त्रोपवेष्टितम् ॥ मधुनाप्यथवाज्येन गुडशर्करयापि वा ॥ तैलेनाद्भिः पूरयेत्तं यथा स विभवो ज्वरी" इति ॥ ८६ ॥

घी, तिल, जौ इनका हवन शिवजीकी प्रसन्नतार्थ करे । ब्राह्मणोंको सुवर्ण दक्षिणा देताहुआ इस मंत्रका उच्चारण करे ॥ ८६ ॥

महेश देवदेवेश वासुदेव परात्पर ॥
कुंभेनानेन दत्तेन ज्वरः क्षिप्रं प्रणश्यतु ॥ ८७ ॥
संततं संनिपातं च तृतीयकचतुर्थकौ ॥
पाक्षिकं मासिकं चापि सांवत्सरिकमेव वा
नाशयेतां मम क्षिप्रं वासुदेवमहेश्वरौ ॥ ८८ ॥

मंत्रानाह-महेशेत्यादि ॥ हे महेश वासुदेव परात्पर दत्तेन अनेन कुंभेन ज्वरः शीघ्रं नश्यतु । संततमिति ॥ हे वासुदेवमहेश्वरौ भवन्तौ मम संततादीन् ज्वरान् क्षिप्रं नाशयेताम् । पक्षमनुवर्त्तमानं मासं भृतं संवत्सरं भृतम् अत्र भृतार्थे रुक् ॥ ८७ ॥ ८८ ॥

मंत्र–महेश इत्यादि–हे महेश ! हे देवदेवेश ! हे वासुदेव ! हे परात्पर ! इस कलशके देनेसे मेरा ज्वर शीघ्र नाशको प्राप्त होवे ॥ हे कृष्ण ! हे महेश्वर ! मेरे संन्तत वा सन्निपात, तृतीयक ज्वर, चातुर्थिक ज्वर, पन्द्रह दिन बाद होनेवाले ज्वर, मासिक ज्वर, वार्षिक ज्वरको शीघ्र नाश करो ॥ ८७ ॥ ८८ ॥

कलशमरुणमीदृशं प्रदाय
क्षितिविबुधाय शुचिश्रुतान्विताय ॥
तदहनि तिलमाषलोहदानं
विमलमतिर्विदधीत दुग्धपानम् ॥ ८९ ॥

अनंतरकृत्यमाह–कलशेति ॥ ईदृशम् अरुणं कलशं क्षितिविबुधाय ब्राह्मणाय प्रदाय दत्त्वा तदहनि तस्मिन्नेव दिने तिलादित्रयदानमित्यत्र प्रदायेत्यावृत्य संबंधनीयम् । विमला शुद्धा मतिर्यस्य स ज्वरी पयःपानं विदधीत । दुग्धपानमित्यनेन भोजननिषेधः । कीदृशाय ब्राह्मणाय। शुचिः स्नानं श्रुतं वेदस्ताभ्याम् अन्विताय युक्ताय । तथा च कर्मविपाके– "ततो विप्राय संतर्प्य मिष्टान्नैः पायसैर्घृतैः ॥ माषांस्तिलाञ्जलं वापि विप्रेभ्यः शक्तितो ददेत्" इति ॥ ८९ ॥

इस प्रकारके लाल कलशाको पवित्र वेदपठित ब्राह्मणको देकर उसी दिन तिल, उडद, लोहा दान करके निर्मलबुद्धिहुआ ज्वरी दुग्धपान करे ॥ ८९ ॥

दद्यादुद्यज्ज्वरविरतये राजतं वापि ताम्रं
गद्याणानां सपरिघटितं त्रिंशता वा पलाभ्याम् ॥
माद्यन्मूर्तिं मकरममलं रत्नलांगूलजिह्वं
कांतं भास्वत्कनकनयनं कृष्णवस्त्रावृतांगम् ॥ ९० ॥

ज्वरमात्रे मकरदानमाह–दद्यादितियुग्मम् ॥ नरः उद्यंश्चासौ ज्वरश्च तस्य विरतये नाशाय राजतं वा ताम्रं घटितं मकरं द्विजाय दद्यात् । कीदृशं मकरं गद्याणानां माषषट्कानां त्रिंशता सुघटिम् । अथवा पलाभ्यां सपरिघटितं सुष्ठु परि समंताद्धटितम् । पुनः कीदृशम् । माद्यती मूर्तिर्यस्येति । पुनः कीदृशम् । अमलम् अम्लादिघर्षणात् मलरहितम् पुनः कीदृशम् । रत्नानां लांगूलं जिह्वा च यस्य। पुनः कांतं सुंदरम् ॥ पुनः भास्वती देदीप्यमाने कनकनेत्रे यस्य तम् । पुनः

कृष्णवस्त्रेण आवृतम् अंगं यस्य तस्य तम् ॥ २९० ॥

प्रचण्डज्वरकी शान्तिके लिये चांदी या तांबेकी पन्द्रह अथवा आठ तोलेकी मगरकी मूर्ति बनाकर और फिर उस मूर्तिको खटाईसे साफ करके रत्नोंकी पूंछ और जीभ बनावे और चमकदार सोनेके नेत्र बनावे और उस मूर्तिको फिर काले वस्त्रसे ढांक देवे ॥ २९० ॥

अंघ्रावंघ्रौ नवघृतभृतं कांस्यपात्रद्वयं स्या-
त्तस्यात्यच्छोदकभृतिपृथौ ताम्रपात्रे स्थितिश्च ॥
श्रुत्याचारप्रशमनिधये निर्द्धनाय द्विजाय
स्तुत्या नत्या वसुवितरणैः साधुसंतोषिताय ॥ ९१ ॥

अंघ्राविति ॥ अंघ्रौअंघ्रौ प्रतिचरणं नवं नूतनं घृतं तेन पूर्णं कांस्यपात्रद्वयं स्यात । तथा तस्य मकरस्य पृथौ विस्तीर्णे ताम्रपात्रे स्थितिश्च स्यात । कीदृशे ताम्रपात्रे अत्यच्छोदकं बिभर्तीति चरणयोर्द्वित्वात्कांस्यपात्रचतुष्टयं कार्यमित्यर्थः । कीदृशाय द्विजाय श्रुतिर्वेदः, आचारः सद्विचारः, प्रशमः शांतिः तेषां निधये । पुनः । निर्धनाय दरिद्राय। पुनः स्तुत्या स्तुतिभिः नत्या नमस्कारादिभिः, वसुवितरणैः धनदानैः साधु यथा तथा संतोषं प्रापिताय ॥ ९१ ॥

उस मकर ( मगर ) के चारों पैरोंके नीचे घीसे भरेहुए चार कांसीके वर्तन रखे । फिर शुद्ध जलसे भरेहुए तांबेके बडे पात्रमें कांस्यपात्रस्थ उस मगरको रखे । पुनः वेद आचार और शान्तियुक्त धनरहित ब्राह्मण स्तुति नमस्कार तथा धनदान जिससे अच्छीतरह प्रसन्नहो ऐसे ब्राह्मणको उस मगरको दानकरे ॥ ९१ ॥

जुहुयाद्वैष्णवैर्मंत्रैर्माहेशैश्च शुभं हविः ॥
ददत्पुराणपठितं मंत्रमेतदुदीरयेत् ॥ ९२ ॥

दानविधिमाह—जुहुयादिति ॥ मकरं ददत् पुमान् विष्णुर्देवता येषां ते महेशो देवता येषां ते ईदृशैर्मंत्रैः शुभमुत्तमं हविर्जुहुयात् । च पुनः पुमान् पुराणपठितम् एनं मंत्रं उदीरयेत् उच्चारयेत् ॥ ९२ ॥

मगरको देताहुआ विष्णुके तथा महादेवके मंत्रोंसे उत्तम शाकल्यका हवन करे । पुराणोंमें पढेहुए इस मंत्रका उच्चारण करे ॥ ९२ ॥

मंत्रः—"नमो महेश देवेश वासुदेव परात्पर ॥
मकरस्यास्य दानेन ज्वरः क्षिप्रं प्रणश्यतु ॥ ९३ ॥"

नमो महेशेत्यादि॥ अयं पौराणिकमंत्रः अस्मिन्नर्थे कर्मविपाके-"कुर्यात्तं मकरं सम्यग्राजतं ताम्रमेव च। पलत्रयेण द्वाभ्यां वा यद्वेकेन शुभाकृति। यद्वा विभवविस्तारैः कुर्याद्वित्तस्तिमानतः॥ पुच्छे रत्नानि देयानि कांडे कांडे विचक्षणैः। नेत्रे स्वर्णमये कार्ये जिह्वामित्थं प्रकल्पयेत्। पादद्वये च दातव्यं घृतपात्रद्वयं द्वयम्। कृष्णवस्त्रेण संवेष्ट्य चंदनागुरुचर्चितम्॥ ताम्रे तु जलपात्रे च स्थापयेन्मकरं च तम्। ब्राह्मणं व्रतसंपन्नं शुचिं दान्तमलोलुपम्। प्रसाद्य गृहमाकार्य प्रणिपत्य क्षमाप्य च। वस्त्रैः कटककेयूरैः ...र्यदंगुलीयकैः। ततः प्रदद्यात्तद्दानं कृत्वा होमं च मंत्रवित्॥ ९३॥"

नमोमहेश इत्यादि-हे महेश! हे देवेश! हे वासुदेव! हे परात्पर! आपको नमस्कार है इस मगरके दानसे मेरे ज्वरको शीघ्र नष्ट कीजिये॥ ९३॥

एकांतरं संततं च तृतीयकचतुर्थकौ॥
पाक्षिकं मासिकं चापि सांवत्सरिकमेव च॥
नाशयेतां मम क्षिप्रं वासुदेवमहेश्वरौ॥ ९४॥

एकांतरमिति॥ वासुदेवमहेश्वरौ श्रीकृष्णशंकरौ ममैकांतरादिज्वरान् नाशयेताम्। स्पष्टमन्यत्॥ ९४॥

एकाहिक, सन्तत, तृतीयक, चतुर्थक, पाक्षिक, मासिक, वार्षिक, सम्पूर्ण मेरे ज्वरोंको हे शिव! हे कृष्ण! शीघ्र नाश कीजिये॥ ९४॥

विश्वध्यातपदारविंदविगलच्चन्द्रप्रभाजिज्जलं
शश्वद्विस्फुरदच्छकौस्तुभशुभश्रीभासुरोरःस्थलम्॥
प्रख्यातोपनिषत्प्रकाशितमहःस्तोमं तमीशं हरिं
ध्यायन्नायतिदुर्हरादपि नरः को न ज्वरान्मुच्यते॥ ९५॥

विश्वध्यातेति॥ ईशं परमेश्वरं तं हरिं श्रीनारायणं ध्यायन् स्मरन् कः नरः ज्वरात् न मुच्यते। कीदृशात् ज्वरात्। आयतौ उत्तरकाले दुःखेन हर्तुमशक्यात्। कीदृशं हरिम्। विश्वैर्ब्रह्मादिभिर्ध्यातं यत्पदारविंदं चरणसरोजं तस्मात् विगलत् निःसरत् चंद्रप्रभाजित् चंद्रकांतिपराभावुकं यद् उदकं भागीरथीलक्षणं यस्य सः तम् औज्वल्येन चंद्रप्रभाजिज्जलम् अर्थाद्गंगाख्यं यस्य सः तादृशम्। पुनः कीदृशं हरिम्। शश्वन्निरंतरं विस्फुरत् देदीप्यमानोऽच्छो निर्मलो यः कौस्तुभः तस्य शुभा या श्रीः शोभा तया



भासुरं शोभनशीलमुरःस्थलं यस्य सः तम्। पुनः कीदृशं हरिम्। प्रख्याता प्रसिद्धा या उपनिषद् वेदस्तेन प्रकाशितः निरूपितो महसां तेजसां स्तोमः समूहो यस्य सः तम्। "एवं कृत्वा स दानं तु संतर्प्य द्विजपुंगवान्। महेश्वरौ तौ संस्मृत्य मुच्यते वै ज्वरान्नरः"॥ ९५॥

ब्रह्मादिक देवताओंने जिन चरणकमलोंका स्मरण कियाहै, जिनसे चन्द्रमाकी कांतिको जीतनेवाला जल निकलाहै (अर्थात् श्रीगंगाजी) और जिनका वक्षस्थल निरन्तर निर्मल देदीप्यमान कौस्तुभमणिकी शोभासे शोभितहै, प्रसिद्ध वेदोंमें जिनके तेजका समुदाय प्रकाशित कियागयाहै ऐसे सामर्थ्ययुक्त विष्णुभगवान्का स्मरण करनेवाला कौन पुरुष उत्तरकाल (आनेवालेसमय) में भी दुःसाध्य ज्वरसे नहीं छूटताहै? अर्थात् वर्तमान तथा भविष्य सभी ज्वरोंसे भगवान्का स्मरण करनेवाला मनुष्य मुक्त होताहै॥ ९५॥

याः पीयूषपयोनिधेरुदभवन् यासां च वृन्दावने
कृष्णाः केलिकुतूहली व्यरचयद्वैदग्ध्यमाराधने॥
पावित्र्यं तनुते रजस्त्रिजगतां यासां खुरैरुद्धतं
ता रोगाद्भयमर्चिताः सुरभयस्तुष्टा हरेयुर्द्रुतम्॥ ९६॥

याः पीयूषेति॥ ताः सुरभयो धेनवो द्रुतं शीघ्रं रोगाद्भयं रोगभयं हरेयुः। कीदृशः सुरभयः। अर्चिताः दानादिकर्मसु अर्चिताः पूजिताः सत्यस्तुष्टाः कंडूयनादिभिः प्रीताः सत्यस्तासामर्चनं कार्यमिति भावः। ताः का इत्याह-याः सुरभयः पीयूषपयोनिधेः अमृतसागरात् उदभवन् उद्गताः यासां सुरभीनाम् आराधने कृष्णः श्रीनारायणः वृंदावने केलिकुतूहली सन् क्रीडाकौतुकयुक्तः सन् वैदग्ध्यं चातुर्य्यं व्यरचयत। चारणमिषेण श्रीनारायण आरराधेत्यर्थः। यासां खुरैः उद्धतं रजः त्रिजगतां स्वर्गमृत्युपातालानां पावित्र्यं तनुते विस्तारयति॥ ९६॥

अमृत सागरसे उत्पन्न हुए श्रीकृष्णने वृन्दावनमें जिन गौओंकी सेवामें क्रीडाओंसे कौतुक (तमाशा) युक्त होकर चतुराई रचीथी। जिन गौओंके खुरोंसे उत्पन्नहुई धूलि भूलोक भुवर्लोक और स्वर्गलोकको पवित्र करतीहै, वे गौमाता दानादिकर्मोंमें पूजा की हुई तथा प्रसन्न की हुई मेरे रोगोंके भयको शीघ्र हरें॥ ९६॥

निखिलनिगमसंपदाश्रयाणां
वरयशसां विहिताध्वरक्रियाणाम्॥

विधिवदनिशमर्चनं द्विजानां
भवति शुभाय रुजांशमाय वाशु ॥ ९७ ॥

निखिलेति ॥ द्विजानां ब्राह्मणानाम् अनिशं निरंतरम् विधिम् अर्हति विधिवत् अर्चनं पूजनं आशु शुभाय रोगाणां शमाय भवति । कीदृशानां द्विजानां निखिलनिगमानां संपदः सांगोपांगशाखादिभेदेन समृद्धेः आश्रयाणाम् आराध्यभूतानाम् । पुनः कीदृशाम् । वरं ... येषां ते तेषाम् । पुनः कीदृशाम् । विहिता अनुष्ठिता अध्वरक्रिया यज्ञक्रिया यैस्तेषाम् ॥ ९७ ॥

सम्पूर्ण वेदोंकी सम्पत्तिके स्थान, वरदानको यश समझनेवाले यज्ञ क्रियाओंके करनेवाले ब्राह्मणोंका विधिवत् प्रतिदिन पूजन ही रोगोंके दूर करनेके लिये तथा कल्याण करनेके लिये होताहै ॥ ९७ ॥

बुधा नूनमागंतुमाहुश्चतुर्द्धा-
भिघाताभिषंगाभिशापाभिचारैः ॥
क्षतच्छेददाहश्रमैरादिमस्तु-
व्यथाशोफवैवर्ण्ययुग्वातलिंगः ॥ ९८ ॥

परिशिष्टमागंतुज्वरमाह–बुधा इति ॥ नूनं निश्चितं बुधाः वैद्याः अभिघातादिभिश्चतुर्भिः कारणैः आगंतुकं ज्वरं चतुर्द्धा आहुः । कार्यकारणयोरभेदोपचारादागंतुकमिति निर्देशः । आगंतुजमिति यावत् । अभिघातः शस्त्रादिभिरग्न्यादिभिश्च । अभिषंगो ग्रहक्रोधादीनामभिव्याप्तिः । अभिशापो गुर्वादिकृतमनिष्टाशंसनम् । अभिचारः प्रतिकूलमंत्रकृतः श्येनयागादिकर्मविशेषः । यथोद्देशं लक्षणविभागमाह–क्षतेति । आदिमोऽभिघातजः पुनः क्षतादिभिश्चतुर्द्धेति भावः । क्षतं "नातिच्छिन्नं नातिविद्धमुभयोर्लक्षणान्वितम् । विषमं व्रणमंगे यत्क्षतं तदभिनिर्दिशेत्" इति । छेदोंऽगानां द्वैधीभावः । दाहो अग्न्यर्कादिभिर्दहनं श्रमः खेदः कीदृशः आदिमः व्यथादिकं युनक्तीति युक् । व्यथा पीडा शोफः श्वयथुः वैवर्ण्यं वर्णान्यत्वम् । अत्र क्षतादित्रयजे व्यथादिसमुदायस्य योगः । श्रमजे तु व्यथा एव इत्यवधेयम् । वातलिंगः वातज्वरोक्तानि लिंगानि यस्मिन्सः । अत्र पौर्वापर्याय निर्देशेन पूर्वं व्यथादिभिः सहैव संतापकारी ज्वर उत्पद्यते । अनंतरं च वायो-



रनुबंधात्तल्लक्षणमिति सूचितं तदुक्तं–"आगंतुर्हि व्यथापूर्वं जायते पश्चात्त्रिजैर्दोषैरनुबध्यते" ॥ ९८ ॥

विद्वान् वैद्य आगन्तुकज्वरको चार प्रकारका कहतेहैं । अभिघात १ अभिषंग २ अभिशाप ३ अभिचार ४ । शस्त्र मुट्ठी लकडी ढींम आदिकोंकी चोटको अभिघात कहतेहैं । कामदेव, ग्रह, भूत, प्रेत, आदिकोंके सम्बन्धको अभिषंग कहतेहैं । ब्राह्मण गुरु वृद्ध सिद्ध योगियोंके क्रोधसे अनिष्ट कथनको अभिशाप कहतेहैं । विपरीत मंत्रों द्वारा श्येनादि यज्ञ करनेसे जो अनिष्ट फल होताहै उसको अभिचार कहतेहैं । क्षत, छेद, दाहसे पीडा सूजन और वर्ण बदलना ये लक्षण होतेहैं । श्रमसे पीडा ही होती और वातज्वरमें कहेहुए लक्षण होतेहैं । आगन्तुक ज्वरमें पीडा पहिले होतीहै और दोषोंका सम्बन्ध पीछे होताहै ॥ ९८ ॥

ग्रहावेशक्रोधौषधिविषशुचाकामभयजोऽ-
भिषंगात्सोद्वेगो ग्रहज इह संरोदिति हसन् ॥
प्रकंपः क्रोधोत्थे शिरसि च रुगुग्रौषधिभवा
द्विगंधान्मूर्द्धार्तिभ्रमवमनमूर्छाक्षवथवः ॥ ९९ ॥

सार्द्धत्रिभिरभिषंगजं विवृणोति ग्रहेति ॥ ग्रहस्य देवादेर्भूतस्य वा आवेशः,ग्रहावेशश्च क्रोधश्च औषधिश्च विषं च शुचा शोकः भागुरिमतेन। हलंताट्टाप्।कामश्च भयश्च तेभ्यो जायते यो ज्वरः सोऽभिषंगादुत्पन्नो वेदितव्यः अभिषंगादभिषंगहेतुक आगंतुरिति यावत् । स ग्रहादिभ्यो जायत इति स तथा एवं च सप्तविध इति । इह ग्रहजे ग्रहावेशजे ज्वरे सोद्वेगः उद्वेगेन सहितः सोद्वेगः सोच्चाटो भवति । नर इति शेषः । हसन् सन् संरोदिति क्रोधोत्थे क्रोधाज्जाते ज्वरे प्रकंपो वेपथुः शिरसि मूर्द्धनि च उग्रा रुक् पीडा भवति । औषधिभवात् विट्खदिरवचादिकभवाद् विगंधाद्दुर्गंधात् जाते ज्वरे मूर्च्छार्त्यादयो भवंति मूर्द्धार्तिः । शिरोर्तिः भ्रमश्चलनं वमनं वमिः मूर्च्छा चेतनाच्युतिः क्षवथुः छिक्का ॥ ९९ ॥

सूर्यादि ग्रह अथवा देव, भूत, प्रेतादिकोंका आवेश, क्रोध, औषधि, विष, शोक, काम, भयसे उत्पन्नहुआ ज्वर अभिषंगसे उत्पन्नहुआ ज्वर समझना चाहिये । ग्रहसे उत्पन्न हुए ज्वरमें उद्वेग ( चित्तका स्थिर न होना ) हँसता हँसता मनुष्य रोने लगताहै । क्रोधसे उत्पन्न ज्वरमें कम्प शिरमें अधिक पीडा होती है । वचा आदि उग्र औषधियोंकी दुर्गंधसे उत्पन्न ज्वरमें शिरमें पीडा, भ्रम, वमन, मूर्च्छा, छींक ये लक्षण होतेहैं ॥ ९९ ॥

विषाद्वमितृषासादातीसारक्लममूर्छनम् ॥
शोकाद्रक्तातिसरणं ग्लानिश्चित्तभ्रमापहः ॥ ३०० ॥

विषादिति ॥ विषाज्जाते ज्वरे एतानि लक्षणानि भवंति तान्याह-वमिर्वमनं, तृषा तृष्णा सादोंगानाम् अतिसारः अतिसरणं क्लमः श्रमः मूर्छनं मूर्छा, शोकजमाह-शोकाज्जाते एतानि लिंगानि भवंति। रक्तातिसारणं रक्तातीसारः, ग्लानिश्चित्तभ्रमः, तमः अंधकारप्रविष्टस्येव चित्तभ्रमः इत्यनेन प्रलापसंग्रहः ॥ ३०० ॥

विषसे उत्पन्न हुए ज्वरमें वमन, प्यास, शरीर टूटना, अतिसार, आलस्य, मूर्छा होतीहै । शोकसे उत्पन्न ज्वरमें रक्तातीसार ग्लानि चित्तमें भ्रम पैदा होताहै । चित्तभ्रमसे यहांपर प्रलाप भी अर्थ करसक्तेहैं ॥ ३०० ॥

कामजे भक्तविद्वेषस्तंद्रालस्यं मतिभ्रमः ॥
हृद्व्यथाध्माननिश्वासगात्रसंशोषणानि च ॥ ३०१ ॥

कामज इति ॥ कामजे ज्वरे एतानि लिंगानि भवंति तान्याह-भक्तद्वेषोरुचिः, तंद्रानिद्राधिक्यम्, आलस्यमनुत्साहः, मतिभ्रमः बुद्धिवैपरीत्यं, हृद्व्यथा हृदये पीडा, ध्मानं निश्वासोच्छ्वासः, गात्रसंशोषणं कृशता ॥ ३०१ ॥

कामसे उत्पन्न हुए ज्वरमें भोजनमें अरुचि, तन्द्रा, आलस्य, बुद्धिमें फरक, हृदयमें पीडा, अफारा, श्वास, गात्र सूखना ये लक्षण होतेहैं ॥ ३०१ ॥

भयात्प्रलापोऽतीसारश्चेतसश्चानवस्थितिः ॥
यथादोषं विदित्वैषु भिषक्कुर्वीत भेषजम् ॥ २ ॥

भयजन्यमाह-भयादिति ॥ भयाज्जाते ज्वरे एतानि चिह्नानि भवंति तान्याह-प्रलापोऽसंबद्धभाषणम् । अतीसारोतिसारः । च पुनः । चेतसो मनसोनवस्थितिश्चपलता। उक्तानां प्रतीकारमाह-भिषक् वैद्यः एषु आगंतुज्वरेषु यथादोषं विदित्वा ज्ञात्वा स्वस्वदोषानुसारेणेति यावत् । स च यथा अभिघातजेषु वातलिंग इत्यनेन वातस्यानुबंधः । ग्रहजे दुर्गंधजे विषे च सन्निपातस्यानुबंधः । यदुक्तं ग्रहादौ-संनिपातस्येति भये च वातस्य भेषजम् औषधं कुर्वीत ॥ २ ॥

भयसे उत्पन्न हुए ज्वरमें प्रलाप, अतिसार, चित्तका एक जगह स्थित न होना ये लक्षण होतेहैं । वैद्य आगन्तुक ज्वरोंमें दोष विचार कर औषधी करै ॥ २ ॥



गुर्वादिशापादिह सन्निपात-
समानलिंगश्च तथाभिचारात् ॥
अस्मिन्पुरा चेतसि तापसंप-
त्ततस्तनौ दाहतृषादयश्च ॥ ३ ॥

अभिशापाभिचारजावाह-गुर्वादिशापादिति ॥ इह प्रकरणे गुर्वादिशापाजातो यो ज्वरः सः सन्निपातेन समानं लिंगं यस्य ईदृशो भवति । आदिपदेन सिद्धायः सन्निपातेत्यनेनात्र दोषत्रयानुबंधः सूचितः । अभिचाराज्जातो ज्वरः सोपि तथा सन्निपातलिंग इति यावत् । अस्मिन्नभिचारजे पुरा पूर्वं चेतसि तापसंपत् संतापाभिवृद्धिस्ततः पश्चात् तनौ दाहतृषादयो भवंति। आदिपदेन भ्रममूर्च्छादयः। एतच्च यथासंभवमभिशापजेऽपि ज्ञेयम् । उक्तं च " अभिशापाभिचाराभ्यां मोहस्तृष्णा च जायते " इति ॥ ३ ॥

गुरु आदि वृद्धजनोंके शापसे सन्निपातज्वरके समान लक्षण होतेहैं । तथा अभिचारसे उत्पन्न हुए ज्वरमें सन्निपातके समान लक्षण होतेहैं। इस अभिचारज ज्वरमें पहिले मनमें सन्तापकी वृद्धि होतीहै पश्चात् शरीरमें दाह, प्यास, भ्रम, मूर्च्छा आदि लक्षण होतेहैं ॥ ३ ॥

दैवव्यपाश्रयं कर्म कुर्वीतागंतुजे ज्वरे ॥
नृणामिष्टार्थसंपत्तिः पुण्यैरेवोपजायते ॥ ४ ॥

प्रतीकारमाह-दैवेति ॥ आगंतुजे ज्वरे दैवं व्यपाश्रयोऽवलंबनं यस्य तादृशं बलिहोममंत्रादिकं कर्म कुर्वीत वैद्य इति शेषः । अभिचाराभिशापज इति वक्तव्ये आगंतुज इति वचनं क्षतजाद्यागंतुजप्राप्त्यर्थम् । अर्थांतरन्यासेन दृढयति-इष्टार्थसंपत्तिः विहितार्थसमृद्धिः नृणां पुरुषाणां पुण्यैरेव उपजायते ॥ ४ ॥

आगन्तुक ज्वरमें दैवव्यपाश्रय कर्म ( बलि होम जपादि कर्म ) कराने चाहिये । क्योंकि पुण्योंसे ही मनुष्योंके इष्टकी सिद्धि होतीहै ॥ ४ ॥

मूर्छारुचिश्वासतृषातिसारहिक्कावमीकासविबंधसादान् ॥
उपद्रवाञ्शास्त्रदृशोदशोग्राञ्ज्वरस्य सर्वस्य समामनंति ॥ ५ ॥

उपद्रवानाह-मूर्च्छेति ॥ शास्त्रविदो वैद्या ज्वरस्य उग्रानुत्कटान् मूर्छादीन् दश उपद्रवान् उत्तरकालहेत्वंतरकुपितदोषोपबृंहितप्रधानव्या-

धिजन्यान् विकारान् आमनन्ति कथयन्ति । यदुक्तं-"व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः ॥ उपक्रमविरोधी च स उपद्रव उच्यते" इति। विबंधो विग्रहः, सांदोंगस्फुटनिका "श्वासो मूर्छारुचिश्छर्दिस्तृष्णातीसारहृद्ग्रहाः ॥ हिक्काकासांगभेदश्च ज्वरस्योपद्रवा दश" इति सुश्रुते ॥ ५ ॥

मूर्च्छा, अरुचि, श्वास, प्यास, अतिसार, हिचकी, वमन, कास, मल रुकना, शरीरमें फूटन ये दश प्रचण्ड उपद्रव सम्पूर्ण ज्वरोंके वैद्य कहतेहैं ॥ ५ ॥

ज्वराविरोधेन भिषग्विदध्या-
देतेषु दोषोचितमेव कर्म ॥
मूर्च्छातिसारौ वमिसादहिक्का
ज्वरेविशेषादतिदुश्चिकित्स्याः ॥ ६ ॥

सामान्यतः प्रतीकारमाह-ज्वरेति ॥ भिषग्वैद्यः एतेषु मूर्छादिषु उपद्रवेषु ज्वराविरोधेन येन कर्मणा क्रियमाणो यो ज्वरस्य विरोधी न भवति यथा ज्वरो न वर्द्धते तथेति यावत । दोषस्य अर्थान्मूर्च्छाधारात्मकस्य उचितमेव कर्म विदध्यात्कुर्यात्। मूलव्याधेरेव विरोधेन चिकित्सा कार्या। तत्र सोपद्रवमन्योन्याविरोधेनोपक्रमेत् बलवंतमुपद्रवं चेति। ज्वरे मूर्च्छातिसारौ वम्यादयो विशेषात, अतिदुश्चिकित्स्याः किन्त्वसाध्या एते । तेनोत्पत्तावेव तूर्णं चिकित्सेदिति भावः ॥ ६ ॥

मूर्च्छा आदि उपद्रवोंके होनेपर वैद्यको ज्वरके अविरोधसे अर्थात् जिससे ज्वर न बढे दोषोंके उचित ऐसी चिकित्सा करनी चाहिये । ज्वरमें विशेष करके मूर्च्छा, अतिसार, वमन, अंगमें फूटन, हिचकी ये उपद्रव हों तो ज्वर असाध्य जानना चाहिये ॥ ६ ॥

मूर्च्छायामिह कृतमालहारहूरा-
कट्टीभिः सह जलपर्पटाभयाभिः ॥
संसिद्धं जलमतिशीतमिष्टमुक्तं
लेहो वा मधुत्रिवृतासिताभयाभिः ॥ ७ ॥
शीतांभसाक्षिसेकः सुरभिर्धूपः सुमनसश्च शुभाः ॥
मृदुतालवृंतवातः कदलीदलकमलसंस्पर्शः ॥ ८ ॥

क्रमेण विशेषतः प्रतीकारमाह-मूर्च्छेति ॥ इह ज्वरे मूर्छायां जलादिभिः सह कृतमालादिभिः संसिद्धं सम्यक् प्रकारेण सिद्धं शृतं जलं क्वाथम्।

अतिशीतं सत् इष्टम् उक्तं वैद्यैरिति शेषः । कृतमाल आरग्वधः हारहूरा द्राक्षा, कट्टी तिक्ता, जलं बालकं, पर्पटः कवचः, अभया पथ्या, अथवा-मध्यादिभिर्लेहोऽवलेहः इष्ट उक्तः । त्रिवृदभये समे तच्चतुर्गुणा सिता तस्याश्चांभश्चतुर्गुणं दत्त्वा आतंतुसभावात्पाकः शीतीभूते च सिता समं मधुप्रक्षेपः । अस्य च विरेचनत्वात्कोष्ठं विभज्य मात्रा इति ध्येयम् ॥ शीतांभसेति ॥ इह मूर्छायां शीतेन अंभसा अक्षिसेको नेत्रसेचनं इष्टः उक्तः । धूपः सुरभिः इष्टः । अगरुचंदनादिजत्वात् । शुभाः सुगंधयः सुमनसः पुष्पाणि इष्टानि शनैः प्रक्षेपात् मृदुतालवृंतस्य वातः इष्टः । कदली-दलकमलसंस्पर्शो रंभादलकमलपत्राणां सम्यक्प्रकारेण स्पर्शः स्पर्शनम् इष्टम् ॥ ७ ॥ ८ ॥

मूर्च्छामें अमलतास, मुनक्का, कुटकी, नेत्रवाला, पित्तपापडा, हरड, इनका क्वाथ अत्यन्त ठंढा करके पीवे । निशोथ, हरड, समभागको चतुर्गुण मिश्री और मिश्रीसे चतुर्गुण पानी इन सबकी चासनी करै । और फिर ठंढा होनेपर मिश्रीके समान सहत मिलाकर चाटे इससे मूर्च्छा दूर होतीहै । तथा मूर्च्छामें ठंढे जलसे नेत्रोंमें छींटा मारे । सुगन्धित पुष्पोंकी माला धारण करे तथा सुगन्धित धूपको सूंघे, कोमल ताडके पंखेसे हवा करावे और केला तथा कमल-पत्रोंका स्पर्श करै ( छूवे ) ॥ ७ ॥ ८ ॥

अरुचावतितिक्तरसैरसकृत्कवलग्रहस्तथाम्लरसैः ॥
मधुलवणमातुलुंगीफलकेसरधारणं वक्त्रे ॥ ९ ॥

अरुचिचिकित्सामाह-अरुचाविति ॥ अतितिक्तरसैः पटोलनिंबादीनां रसैः कृत्वा अरुचौ असकृद्वारंवारं कवलस्य ग्रहः धारणं लिंगपरिणामेन इष्टमित्यावर्त्तते । तथैव अम्लरसैः आमलकाम्लीकादीनां रसैः कवलग्रह इष्ट उक्तः । वक्त्रे मध्वादिधारणमिष्टं लवणमत्र सैंधवम् । मातुलुंगीफलकेसरं बीजपूरमांसम् ॥ ९ ॥

ज्वरमें अरुचि होजाय तो परवल या नीमके पत्ते तथा और तिक्त रसवाली ( कडुवी ) औषधियोंका कल्क मुखमें बारवांर धारण करे । तथा अम्लरसवाली ( खट्टी ) औषधियोंका ग्रास बारबार मुखमें रखे । तथा सहत सेन्धानोन बिजोरेके फलकी केसर इन औषधियोंका कल्क मुखमें धारणकरे ॥ ९ ॥

श्वासे दशांगयोगः सबले द्वात्रिंशदंगकः श्रेष्ठः ॥
लेहः कर्कटशृंगीकृष्णामधुसोमवल्कलैर्लेहः ॥ १० ॥

अथ श्वासचिकित्सामाह-श्वास इति ॥ श्वासे दशांगयोगः मुस्तं सकुस्तुंबुरु इत्यादिनोक्तः । सबले अतिमहति श्वासे द्वात्रिंशदंगकः, अभिन्यासचिकित्सायां भार्गी निंबधनेत्यादिनोक्तः श्रेष्ठः । वा अथवा इह श्वासे कर्कटशृंग्यादिभिर्लेहोऽवलेहः श्रेष्ठः, कर्कटशृंगी प्रसिद्धा । कृष्णा पिप्पली, मधु सारघं, सोमवल्कलं कट्फलम् । अत्र भेषजप्रयोगश्वासकृत मुहुर्मुहुर्विषच्छर्दिहिध्मातृट्श्वासकासेष्विति ॥ ३१० ॥

श्वासमें दशांगयोग ( मुस्तं सकुस्तुम्बुरु इत्यादि ) का काथ तथा बत्तीस औषधियोंका योग ( भार्गी निम्बघनेत्यादि ) का काथ पीवे । काकडासींगी पीपर कायफल इनका चूर्ण सहतमें मिलाकर चाटे ॥ ३१० ॥

त्रिकटुशठीघनशृंगीगर्दभशाकं सपौष्करं सपदि ॥
श्वासं जयति पयोधरसुधालतापंचमूलजलं पीतम् ॥ ११ ॥

त्रिकट्वीति ॥ सपौष्करं पुष्करमूलेन सह वर्त्तमानं त्रिकट्वादिकं पयोधरादिजलपीतं सत् सपदि शीघ्रम् श्वासं जयति नाशयति । त्रिकटु व्योषं, शटी कर्चूरः, घनं मुस्ता, शृंगी कर्कटशृंगी, गर्दभशाकं भारंगी, पयोधरं घनं, सुधालता गुडूची, पंचमूलं बिल्वादि महत् जलकाथः अयं च द्विपलमात्रो ननु त्रिकट्वादिचूर्णापेक्षया चतुर्गुणः । यदुक्तं "काथेन चूर्णपानं यत्तत्र काथप्रधानता ॥ प्रवर्तते न तेनात्र चूर्णापेक्षा चतुर्द्विबम् ॥" इति ॥ ११ ॥

सोंठ, मिरच, पीपर, कचूर, मोथा, काकडासींगी, भारंगी, इन औषधियोंका काथ श्वासको दूर करताहै । मोथा, गिलोय, पंचमूल बडा ( बिल्वश्योणाकगांभारी पाटला गणकारिका ) इन औषधियोंका काथ भी श्वासको दूर करताहै ॥ ११ ॥

करकरसबीजपूरकविदारिकालोध्रलेपनं शिरसि ॥
अरतिमपहरति दाहोदन्याजन्यामसंदिग्धम् ॥ १२ ॥

तृषाचिकित्सामाह-करकेति ॥ शिरसि करकरसादिलेपनम् असंदिग्धं निःसंदेहं यथा स्यात्तथा उदन्या पिपासा दाहेतिप्रसंगात् दाहोदन्याम् उत्पन्नाम् अरतिम् अनवस्थितचित्तताम् अपहरति नाशयति । करको दाडिमं तच्चात्राम्लस्पर्शशीतत्वेन लेपतस्तृष्णापहत्वात् । बीजपूरको मातुलुंगः विदारिका भूकूष्मांडो लोध्रः, एतेषां प्रलेपः लेपश्च शीतस्तनुरविशेषी च कार्य इति सुश्रुते ॥ १२ ॥



प्यासकी अधिकतामें अनारका रस बिजोरेका रस विदारीकन्द लोध इनका लेप सिरमें करनस निस्सन्देह दाहसे उत्पन्नहुई प्यास शीघ्र दूर होतीहै ॥ १२ ॥

दंतशठबीजपूरकदाडिमबदरैः सचुक्रिकैर्वदने ॥
लेपो जयति पिपासामथ रजतगुटी मुखांतस्था ॥ १३ ॥

दंतशठेति ॥ चुक्रिकाया अम्लिकायाः फलं तेन सह सचुक्रिकैर्दंतशठादिभिः वदने मुखे लेपः प्रलेपः पिपासा पातुमिच्छा तां जयति । चुक्रिका अम्ललोणिकेति केचित् । दंतशठो जंबीरः, बीजपूरकः मातुलुंगः, दाडिमं बदरः कोलः, सर्वत्र फलैः विकारे उत्पन्नस्याभा । "फले लुक्" इति लुक् । अथेति । मुखांतस्था मुखमध्यस्था रूप्यगुटिका पिपासां जयति ॥ १३ ॥

जम्बीरी, बिजोरा, अनार, बेर, चूका इनके रसका मुखमें लेप कियाहुआ प्यासको दूर करताहै । अथवा चांदीकी गोली मुखमें रखनेसे प्यास दूर होतीहै ॥ १३ ॥

शीतं पयः क्षौद्रयुतं निपीतमाकंठमाश्वेव तदुद्वमेच्च ॥
तर्षप्रकर्षप्रशमाय वक्रे धरेद्गदक्षौद्रवटाग्रलाजाम् ॥ १४ ॥

शीतमिति ॥ क्षौद्रेण मधुना युक्तं शीतं पयः शीतोदकम् आकंठं कंठावधि निपीतम् आश्वेव शीघ्रमेव तद् उद्वमेत् । किमर्थम् । तर्षप्रकर्षप्रशमाय तृष्णाधिक्यशांतये । निपीयेति वाच्ये निपीतमिति वचनम् उद्वमनरहितमपि पानं सूचितम् । अत्र मधुजलयोर्न समांशता "मधुसर्पिर्वसातैलपानीयानि द्विशस्त्रिशः ॥ एकत्र वा समांशानि विरुद्धचंति परस्परम् ॥" इति वचनात् । गदक्षौद्रादीन् वक्रे मुखे तृष्णाधिक्यशांतये धरेत् । गदः कुष्ठं क्षौद्रं मधु वटाग्रं वटप्ररोहः, लाजाः भृष्टव्रीहयः धरेद्धारयेत् ॥ १४ ॥

ठंढा जल और सहत मिलाकर कंठपर्य्यन्त खूब पीवे फिर वमन करे तो अत्यन्त प्यास भी शान्त होजातीहै । अथवा कूठ, सहत, बडकी कोंपल, धानकी खील मुखमें रखनेसे प्यास दूर होती है ॥ १४ ॥

वत्सादिनीवत्सकवारिवाह-
विश्वंभरानिंबविषाः सविश्वाः ॥
ज्वरातिसारं त्वरितं जयंति
विश्वामृतावत्सकवारिदा वा ॥ १५ ॥

अथ ज्वरातीसारचिकित्सामाह-वत्सादिनीति ॥ सविश्वाः वत्सादन्यादयः त्वरितं शीघ्रं ज्वरातिसारं जयंति । वत्सादिनी गुडूची, वत्सकः कुटजस्तस्य बीजं, वारिवाहो मुस्तं, विश्वंभरा, निंबो भूनिंबः, विषा अतिविषा, विश्वा शुंठी तया सहितः । वा अथवा विश्वा शुंठी, अमृता गुडूची, वत्सकः कुटजः, वारिदो वारिवाहः एषां क्वाथो ज्वरातिसारं त्वरितं जयति ॥ १५ ॥

गिलोय, इन्द्रजौ, मोथा, चिरायता, अतीस, सोंठ इनका क्वाथ शीघ्र ज्वरातीसारको दूर करताहै । सोंठ, गिलोय, इन्द्रजौ, नागरमोथा इनका क्वाथ भी ज्वरातीसारको दूर करताहै॥१५॥

पाठामृतापर्पटमुस्तविश्वाकिराततिक्तेंद्रयवान्विपाच्य ॥
पिबञ्जयत्येव जवेन सर्वज्वरातिसारानपि दुर्निवारान् ॥१६॥

पाठेति ॥ पाठादीन् विपाच्य निःक्वाथ्य पिबन् सन् पुमान् जवेन शीघ्रेणैव सर्वातिसारान् जयति । कीदृशान् दुर्निवारानपि दुःखेनातिवारयितुमशक्यानपि । पाठा बकी, अमृता गुडूची, पर्पटः कवचः, मुस्तं घनं, विश्वा शुंठी, किरातस्तिक्तो भूनिंबः इंद्रयवो भद्रयवः ॥ १६ ॥

पाढर, गिलोय, पित्तपापडा, मोथा, सोंठ, चिरायता, कुटकी, इन्द्रजौ इनके क्वाथको पीनेवाला मनुष्य असाध्य ज्वरातीसारसे भी छूट जाताहै ॥ १६ ॥

नीरेण सिंधूत्थरजोतिसूक्ष्मं
नस्येन नूनं विनिहंति हिक्काम् ॥
मयूरपिच्छस्य मषी सकृष्णा
मध्वन्विता वा कटुका सधातुः ॥ १७ ॥

हिक्काचिकित्सामाह-नीरेणेति ॥ नीरेण जलेन अतिसूक्ष्मं सिंधूत्थरजः सैंधवरजो नूनं निश्चयेन नस्येन हिक्कां विनिहंति । वा अथवा मधुना अन्विता कृष्णा पिप्पली तया सहिता मयूरपिच्छस्य मषी अंतर्धूमकृतं भस्मेति यावत् हिक्कां विनिहंति । वा अथवा सधातुः सगैरिका कटुका तिक्ता अत्रापि मध्वन्वितेति संबध्यते । मध्वन्विता इत्यनेन अवलेहता सूच्यते । यदुक्तं सुश्रुते-"गैरिकं कटुरोहिणी" इत्यादि ॥ १७ ॥

सेंधानोनको जलसे अत्यन्त बारीक पीसकर सूंघनेसे निश्चय हिचकी दूर होतीहै । अथवा मोरपंखकी भस्ममें पीपर, कुटकी, गेरू, सहत, मिलाकर चाटनेसे हिचकी दूर होजातीहै ॥१७॥



क्वाथो गुडूच्याः समधुः सुशीतः
पीतः प्रशांतिं वमनस्य कुर्यात् ॥
विण्मक्षिकाणां मधुनावलीढा
सचन्दना शर्करयान्विता च ॥ १८ ॥

अथच्छर्दिचिकित्सामाह-क्वाथ इति ॥ सुष्ठु शीतः सुशीतः मधुना सहितः समधुः गुडूच्याः अमृतायाः क्वाथः पीतः सन् वमनस्य प्रशांतिं कुर्यात् । च पुनः मधुना क्षौद्रेण लीढा मक्षिकाणां विड् विष्ठा वमनस्य शांतिं कुर्यात् । कीदृशी विट्-सचंदना । पुनः कीदृशी-सितया अन्विता संयुक्ता । सुशीत इति क्वाथत्वेन प्राप्तस्य कोष्णत्वस्य व्यवच्छेदाय यत्तु शीतकषायकल्पनार्थमिति तन्न सुशीतक्वाथ इत्यभेदनिर्देशानुपपत्तेः, क्वाथशीतयोर्भिन्नत्वात् ॥ १८ ॥

गिलोयका क्वाथ ठंडा करके सहत मिलाकर पीनेसे वमनकी शान्ति होतीहै । अथवा मक्खियोंकी विष्ठा सफेद चन्दन मिश्री सहत इनके सेवनसे वमन दूर होजाताहै ॥ १८ ॥

लाजमाक्षिकवैदेहीदधित्थरसमिश्रिताः ॥
लिहन्निह नरो नूनं वमिं जयति वेगतः ॥ १९ ॥

लाजेति ॥ नरः लाजादीन् लिहन् सन् इह ज्वरे वमिं नूनं निश्चितं वेगतः जयति । कीदृशीः लाजमाक्षिकवैदेहीः । दधित्थरसमिश्रिताः दधित्थरसः कपित्थरसस्तेन मिश्रिताः युक्ताः लाजा भ्रष्टव्रीहयः माक्षिकं मधु, वैदेही पिप्पली ॥ १९ ॥

धानकी खील, सहत, पीपर छोटी इनको कैथके फलकी मज्जाके रसमें मिलाकर पीनेसे शीघ्र निश्चय ही वमन शान्त होतीहै ॥ १९ ॥

कासे कणा कणामूलं कलिद्रुफलजं रजः ॥
सविश्वभेषजं लिह्यान्मधुना वा वृषाद्रसम् ॥ ३२० ॥

अथ कासचिकित्सामाह-कास इति ॥ कणादीनां रजः चूर्णं मधुना कासे लिह्यात् । कणा पिप्पली, कणामूलं पिप्पलीमूलं, कलिद्रुमफलं विभीतकफलम् । कीदृशं कणादीनां रजः । सविश्वं शुंठीसहितम् । वाऽथवा । वृषाद्रसम् आटरूषाद्रसं मधुना कासे लिह्यात् ॥ ३२० ॥

खांसीमें पीपर, पीपरामूल, बहेडा, सोंठ इनका चूर्ण सहतके साथ चाटे अथवा अडूसेका रस और सहत मिलाकर चाटे ॥ ३२० ॥

अथ ज

पुष्करमूलकटुत्रिकशृंगीकट्फलयासककारविकाभिः ॥
मधुलुलिताभिरियं खलु लेहः कासरिपुः कफरोगहरश्च ॥२१॥

पुष्करमूलेति ॥ अयं पुष्करमूलादिभिर्लेहः खल्विति निश्चयेन । कासस्य रिपुर्नाशकत्वात् । पुनः कफरोगहा । पुष्करमूलं पौष्करं, कटुकं व्योषं, शृंगी कर्कटशृंगी, कट्फलं सोमवल्कलं, यासको यवासकः, कारविका शतपुष्पाभेद इत्येके जीरकभेदः कलोंजी भाषा इति संप्रदायिकाः । कीदृशीभिः पुष्करमूलादिभिः, मधुना क्षौद्रेण लुलिताभिर्मिश्रिताभिः ॥ २१ ॥

पुहकरमूल, सोंठ, मिरच, पीपर, काकडासींगी, कायफळ, जवासा, कलोंजी इनका चूर्ण सहतके साथ सेवन करनेसे खांसी और कफ दूर होताहै ॥ २१ ॥

विबंधे वातजित्कर्म कुर्यादत्रानुलोमनम् ॥
मलं प्रवर्त्तयेदाशु तीक्ष्णाभिः फलवर्तिभिः ॥ २२ ॥

अथ विबंधचिकित्सा–विबंधेति ॥ अत्र ज्वरे विबंधे वातजित् स्वेदाभ्यंगादिकम् अनुलोमनम् एरंडतैलपानादिकं कर्म कुर्यात् । आशु शीघ्रं तीक्ष्णाभिः फलवर्तिभिः मदनफलादिभीरचिताभिर्घृताभ्यक्तैः गुदे क्षेप्याभिः उदावर्त्तजितोक्ताभिर्मलं प्रवर्त्तयेत् । "पिप्पल्यागारधूमश्च मदनं सर्षपास्त्रिवृत् । हेमक्षीरो वचा कुष्ठं किण्वं दंती यवाग्रजः ॥ समूत्रालवणाभ्यक्ता फलवर्तिरियं मता ॥ सस्वेद्यालसके शूले विबंधानाहनाशिनी" ॥ तथा "घृताभ्यक्ते गुदे क्षेप्या श्लक्ष्णा स्वांगुष्ठसन्निभा ॥ मलप्रवर्त्तिनी वर्त्तिः फलवर्त्तिरिति स्मृता" इत्युक्ताः फलवर्तय इति ॥ २२ ॥

मलके रुकजानेपर वातको जीतनेवाले स्वेद अभ्यंगादि कर्म करना चाहिये तथा अनुलोमन एरण्डका तैल वगैरह पिलाना चाहिये । तथा तीक्ष्ण औषधियोंकी बत्ती गुदामें देकर मलको निकालना चाहिये । फलवर्तीका लक्षण कहतेहैं–घीसे गुदाको चिकना करके औषधियोंको अत्यन्त पीसकर अंगूठेके समान चिकनी बत्ती बनाकर गुदामें देना चाहिये । यह बत्ती मलको निकालनेवाली है अतः सद्यः फल देनेसे इसको फलवर्ती कहतेहैं ॥ २२ ॥

सादे ज्वराविरोधेन यथादोषं भिषग्जितम् ॥
ज्वरे शांते प्रशाम्यंति सद्यः सर्वेप्युपद्रवाः ॥ २३ ॥

अथांगसादचिकित्सा–साद इति ॥ वैद्यः सादेंऽगस्फुटनिकायां यथादोषं शास्त्रमनतिक्रम्य ज्वरस्याविरोधेन भिषग्जितं भेषजं कुर्यात् ।



तेषां प्रधानप्रशमे प्रशम इति पक्षमाश्रित्य सर्वेषां सामान्यतोऽप्याह ज्वर इति । ज्वरे शांते सति सर्वे पूर्व उपद्रवाः सद्यः प्रशाम्यंति । तस्मात प्रथमं ज्वरशांतौ प्रयतेतेति ॥ २३ ॥

शरीरमें फूटन हो तो ज्वरके अविरुद्ध दोषके अनुकूल औषधी देनी चाहिये । अर्थात् ज्वर वृद्धिको प्राप्त न हो ऐसी औषधी देना चाहिये । क्योंकि ज्वरके शान्त होने पर सबही उपद्रव शान्त होजातेहैं इससे ज्वरकी प्रधान चिकित्सा करनी चाहिये ॥ २३ ॥

मोहात्मा जनुरंतयोस्तनुभृतां यो मृत्युरोजोऽशनः
क्रोधो रोगपतिर्ज्वरस्त्रिपुरजिद्भालाक्षिजन्मांतकः ॥
पाप्मा दक्षसवप्रमाथनपटुः संतापमूर्तिः प्रभा-
वर्णाग्निप्रतिघातकृन्मुनिवरैरेतैः स्मृतो नामभिः ॥ २४ ॥

शास्त्रे व्यवहारार्थं ज्वरस्य स्वरूपज्ञानार्थं च पर्यायानाह–मोहात्मेति ॥ यो ज्वरः मुनिवरैरेतैर्नामभिः स्मृतः । एतैः कैरित्याह–तनुभृतां देहिनां जनुरंतयोर्जन्ममरणयोर्विषये मोहात्मा मोहस्वरूपः । तदुक्तं चरके–"सर्वे प्राणभृतः सज्वरा एव जायंते सज्वरा एव म्रियंते" इति । मृत्युर्मृत्युस्वरूपः ओजोऽशनं यस्य सः ओजोऽशनः तन्नाशक इति यावत् । क्रोधो रुद्रक्रोधोद्भवत्वात् । रोगाणां पतिर्मुख्यत्वात् । त्रिपुरं त्रिपुरासुरं जयतीति त्रिपुरजित् रुद्रस्तस्य यद्भालाक्षि ललाटनेत्रं तस्माज्जन्म उत्पत्तिस्थानं यस्य सः । अन्तं सर्वधातूनां नाशं करोति तथा । पाप्मा पापैकजन्मत्वात् । दक्षयज्ञस्य यत् प्रमाथनं शमनं तत्र पटुः । संतापो देहमनस्तापः स एव मूर्त्तिः स्वरूपं लिंगं यस्य सः । प्रभा कांतिः, वर्णो गौरादिः, अग्निः जाठरः, एषां प्रतिघातकृन्नाशकृत् ॥ २४ ॥

ज्वरके मोक्ष (छूटने) के समयमें वात, पित्त, कफ, रस रक्तादि धातुओंको इतस्ततः चलायमान करके वेगसे अधिकताको प्राप्त होतेहैं । शंका–ज्वरके मोक्ष समयमें क्षीण दोषोंकी अधिकता क्यों होतीहै ? जैसे दीपक बुझनेके समयमें अधिक प्रज्वलित होताहै इसीतरह दोष मोक्ष समयमें अधिकताको प्राप्त होतेहैं । अतः मनुष्य कराहताहै (शब्द करताहै) पसीना, कम्प, श्वास, वमन, प्रलाप, इनसे दुःखित होताहै । पतला दस्त होताहै । ज्वरके वेगसे युक्त मनुष्य संज्ञारहित होताहै और क्रोधके समान देखताहै ॥ २४ ॥

दोषो हि ज्वरमोक्षणस्य समये धातूनतिक्रामय-
न्वेगादुल्बणतां व्रजत्यथ नरः कूजत्यति स्विद्यति ॥

कंपश्वासवमिप्रलापविधुरो वर्चोद्रवं चोत्सृज-
न्निःसंज्ञो ज्वरवेगवान्हिमतनुः सक्रोधवद्वीक्षते ॥ २५ ॥

ज्वरे शांते इति पूर्वमुक्ते प्रसंगात् भाविन्या ज्वरशांतिर्ज्ञापकमाह–दोष इति ॥ दोषो वातादिः ज्वरमोक्षणस्य समये ज्वरमुक्तिकाले धातून् रसादीन् अतिक्रामयन् इतस्ततश्चालयन् सन् वेगात् उल्बणताम् उत्कृष्टतां व्रजति। नच कारणभूतदोषस्य शांतिरितिक्षीयमाणस्य दोषस्य कथमाधिक्यमिति वाच्यं यथा निर्वाणावस्थो दीपो विशेषात्प्रज्वलति तथा। अथ पश्चान्नरः कूजति शब्दायते। अति स्विद्यति स्वेदातिशयं प्राप्नोति। द्रवं द्रवरूपं सुवर्चःपुरीषे उत्सृजन् मुञ्चन् निःसंज्ञो भवति निःक्रीतः संज्ञया निःसंज्ञः। कीदृशो नरः। कंपादिविधुरो विह्वलः। पुनः कीदृशो ज्वरवेगवान्। ज्वरस्य वेगो विद्यते यस्य सः। हिमतनुः शीतगात्रः सक्रोधवान् क्रोधेन तुल्यं तद्वीक्षते पश्यति "धातून्संक्षोभयन् दोषो मोक्षकाले विलीयते। तेन व्याकुलचित्तस्तु विसंज्ञ इव लक्ष्यते" इति सुश्रुते। एतल्लक्षणं त्रिदोषजातवेगयोरेव मोक्षणे भवति। यदाह भालुकिः–"त्रिदोषजे ज्वरे ह्येतदंतर्वेगे तु धातुजे ॥ लक्षणं मोक्षकाले स्यादन्यत्र स्वेददर्शनम्" इति त्रिष्विदा गात्र प्रक्षरणे किति चेति गुणनिषेधः ॥ २५ ॥

श्रेष्ठ मुनियोंने मनुष्योंके उत्पन्न तथा मरण समय जो ज्वर आताहै उसका मोहात्मा ( मोहस्वरूप ) नाम रखाहै । मृत्यु ( कालस्वरूप ) ओजोऽशन ( ओजको खानेवाला ) रोगपति, ज्वर, त्रिपुरको जीतनेवाले शिवजीके नेत्रसे उत्पन्न, अन्तक ( सब धातुओंका नाश करनेवाला ) पाप्मा, ( पापसे उत्पन्नहुआ ) दक्षके यज्ञको ध्वंस करनेवाला, शरीर और मनको सन्ताप पहुंचानेवाला, कान्ति वर्ण जठराग्निका नाश करनेवाला ये ज्वरके पर्य्यायवाची शब्द कहेहैं ॥२१॥

अथ ज्वरशान्ति लक्षण ।

अंगानां लघिमा क्लमाद्यपगमाद्वक्त्रस्य चापांडुता
पाकाविंद्रियपाटवं बहुविधा वाञ्छान्नपानादिषु ॥
कंडूतिः शिरसः क्षवश्च भवति स्वेदः समंताज्ज्वरे
शांते लिंगमिदं वदंति विबुधाः पूर्वेग्निवेशादयः ॥ २६ ॥

अथ ज्वरशांतिलक्षणमाह–अंगानामिति ॥ अग्निवेश आदिर्येषां तेऽग्निवेशादयः पूर्वे विबुधाः विद्वांसः आचार्याः, ज्वरे शांते इदं लिंगं वदंति । इदं किमित्याहुः–अंगानां लघिमा भवति । कस्मात् । क्लमादीनाम् अपगमात् नाशात । वक्त्रस्य ईषत्पांडुतापाकौ भवतः । इंद्रियाणां नेत्रादीनां पाटवं स्वस्वविषयग्रहणे सामर्थ्यम्, अन्नपानादिषु बहुविधा बहुप्रकारं वांछा । पानादीत्यादिपदेन चोषावलेहे ग्राह्ये । शिरसः कंडूतिर्भवति । च पुनः क्षवः छिक्का भवति । तल्लक्षणं हि–"प्राणापानौ समौ स्यातां मूर्ध्नि स्रोतः पथि स्थितौ ॥ नस्वः प्रवर्तते शब्दः क्षवथुं तं विनिर्दिशेत ॥" इति सुश्रुते । समन्तात् स्वेदो भवति । "लघुत्वं शिरसः स्वेदो मुखपांडुत्वमेव च ॥ क्षवथुश्चान्नलिप्सा च ज्वरैर्मुक्तस्य लक्षणम्" ॥ २६ ॥

प्राचीन अग्निवेशादि विद्वान् ज्वरकी शान्तिके ये लक्षण कहतेहैं । शरीरका हलका होना, क्लम आदिका दूर होना, मुखका पीलापन तथा मुखका पकना, इन्द्रियोंका अपना अपना विषय ग्रहण करना, अन्नपानादिकोंमें अनेक प्रकारकी इच्छा करना, शिरमें खुजली, छींक, पसीना ये लक्षण प्राचीन अग्निवेशादि विद्वानोंने ज्वरके शान्त होनेके कहेहैं । अर्थात् जब ज्वर चलाजाताहै तब ये लक्षण होतेहैं ॥ २६ ॥

न दिवा स्वापसौहित्यशीततोयांगना भजेत् ॥
व्यायामं चाबलप्राप्तेरेवमारोग्यमाप्नुयात् ॥ २७ ॥

ज्वरे वर्ज्यमाह–न दिवेति ॥ आबलप्राप्तेः बलप्राप्तिं मर्यादीकृत्य दिवा स्वापादि न भजेत् न सेवेत । दिवा स्वापः दिवा स्वप्नं–सौहित्यं तृप्तिभोजनं, शीततोयम्, अंगनेति संभोगोपलक्षणम्, व्यायामं शरीरायासजनकं कर्म न भजेत् । एवंकारस्तु पिष्टान्नादिसमुच्चयार्थः । एवंप्रकारेण आरोग्यं प्राप्नुयात् ॥ २७ ॥

ज्वरी मनुष्य ज्वरसे मुक्त होकर जबतक बलवान् न हो तबतक दिनमें सोना, पेटभर (खूब) इच्छानुसार भोजन करना, ठंढा जल, तथा स्त्रीके साथ संभोग, व्यायाम इन कर्मोंको न करे । इस प्रकार पथ्यसे रहनेपर शीघ्र आरोग्यताको मनुष्य पाताहै ॥ २७ ॥

सुधीरभूत्संसदि भूपतीनां
सम्मानभाङ्नागरवंशजन्मा ॥
दोषज्ञमान्यः सुकविः कलावान्
दयानिधानं भुवि देवराजः ॥ २८ ॥

स्वात्मानं प्रशंसयन् ग्रन्थपूर्णतां सूचयति सुधीरिति ॥ भुवि देवराजः अभूत। कीदृशः । सुधीः अर्थात् शोभनं नारायणं ध्यायतीति। पुनः कीदृशः । भूपतीनां राज्ञां संसदि सभायां सम्मानभाक् सम्मानं सत्कारं भजतीति। "भजोण्विः" । पुनः कीदृशः। नागरवंशजन्मा वृद्धनगरे भवा नागरास्तेषां वंशे जन्म उत्पत्तिर्यस्य सः । पुनः कीदृशः। दोषज्ञमान्यः दोषज्ञाः पंडिता वैद्यास्तेषां मान्यः पूज्यः। "दोषज्ञौ वैद्यविद्वांसौ" इति कोशात् । पुनः कीदृशः सुकविः सुष्ठु कविता यस्य । पुनश्च । कलावान्-कलाश्चतुःषष्टिमिताः विद्याविशेषा यस्य स तद्वान् । पुनः कीदृशः। दयानिधानं निधीयतेऽस्मिन्निति निधानं दयाया निधानं दयाकर इति यावत् ॥ २८ ॥

भारतभूमिपर विद्वान्, राजाओंकी सभामें आदर पानेवाला, नागर ब्राह्मणोंके वंशमें उत्पत्ति जिसकी वैद्योंमें पूज्य, सुकवि कला कौशल, दयालु इन गुणोंसे सम्पन्न देवराज वैदाहुए ॥ २८ ॥

तस्यात्मजः शार्ङ्गधरस्त्रिलोकी-
पतिं त्रिनेत्रं त्रिपुरां च शश्वत् ॥
ध्यायन्निमां वैद्यमुदे त्रिदोष-
ज्वरच्छिदे च त्रिशतीं चकार ॥ २९ ॥

तस्यात्मजेति ॥ तस्य देवराजस्य आत्मजः पुत्रः शार्ङ्गधरः इमां त्रिशतीं चकार। किं कुर्वन्। त्रिलोकीपतिं त्रिनेत्रं त्रिपुरां च रुद्रं रुद्राणीं च शश्वत् निरंतरं ध्यायन् सन् । "मंगलादीनि मंगलमध्यानि मंगलांतानि शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि च" इति भाष्यकारवचनादंते मंगलमाचरितं ग्रंथकारेण। किमर्थं चकारेत्याह-वैद्यानां विदुषां भिषजां च मुदे हर्षाय "सर्वज्ञा भिषजो वैद्याः" इति कोशात्। पुनः कस्मै प्रयोजनाय त्रिदोषज्वरस्य छिदे नाशाय। त्रयाणां लोकानां समाहारस्त्रिलोकी तस्याः पतिं स्वामिनम् । त्रिशतीत्यत्रापि बोद्धव्यम् ॥ २९ ॥

देवराजके पुत्र शार्ङ्गधरने तीनों लोकोंके स्वामी शिवजी तथा पार्वतीजीके निरन्तर ध्यान करके तीनों दोषोंसे उत्पन्न ज्वरके नाशके लिये और वैद्योंकी प्रसन्नताके लिये यह त्रिशती नाम ग्रंथ बनायाहै ॥ २९ ॥



मय्यनुग्रहबुद्ध्या वा कवित्वश्रुतिकौतुकात् ॥
संतः संततमेवैनामाद्रियध्वं मनोरमाम् ॥ ३३ ॥

इति श्रीपतिवरवैकुंठाश्रमश्रीचरणशिष्यशार्ङ्गधर-
विरचिता त्रिशती सम्पूर्णा ।

मयीति ॥ हे संतः हे सत्पुरुषाः संततमेव निरंतरमेव एनां त्रिशतीम् आद्रियध्वम् आदरीकुरुत । यूयमिति शेषः । कीदृशीं मनोरमाम् । पदलालित्येन प्रियाम् । आदरे हेतुमाह-मयि विषये अनुग्रहबुद्ध्या कृपाबुद्ध्या वा अथवा कवित्वश्रुतेः कविताश्रवणस्य कुतूहलात् । अत्र अनेकच्छन्दोरचितानि कवित्वानि सततं कुतूहलात् । आदृङ्धातुरादरे तुदादित्वाच्छः प्रार्थनायां लिङ्रिङ्शयग्लिङ्क्षु यजादेशः ॥ ३३० ॥

इति श्रीत्रिशत्याः श्रीवैद्यवल्लभभट्टविरचिता
वैद्यवल्लभाख्या टीका सम्पूर्णा ।

हे सज्जनपुरुषो ! तुम मेरे ऊपर कृपाबुद्धि करके तथा कविताके श्रवणके आनन्दसे निरन्तर पदोंके लालित्यसे मधुर इस त्रिशतीका आदर करो ॥ ३३० ॥

इति श्रीकिशोरीवल्लभविरचिता त्रिशतीभाषाटीका सम्पूर्णा ॥

॥ समाप्तश्चायं ग्रन्थः ॥

---

पुस्तक मिलनेका ठिकाना-
खेमराज श्रीकृष्णदास,
"श्रीवेंकटेश्वर" स्टीम् प्रेस-बम्बई.